ऽयोग्यता यथा ॥

एगपक्खियस्स भिक्खुस्स कप्पइ इत्तरियं दिसं वा अणुदिसं वा धारित्तए वा जहा वा तस्स गणस्स पत्तियं सिया ॥ २४ ॥ व्य. सू. ३ उ.॥

एकपाक्षिकभिन्नपाक्षिकयोर्योग्यायोग्यता ( वाणुपाऽरणाकप्प ) शब्दे ॥

( २५ ) प्रकृतं मेढीभूतः ॥

तत्र गणस्य बहुव्रतिनीसमुदायात्मकस्य प्रत्येकं परीक्षा कर्त्तुं न शक्यते अथाचार्य्ये च परीक्षिते प्रायोगणोऽपि परीक्षित एव मेढ्यादिसमानत्वेन तत्प्रवर्तकत्वादाचार्यस्य गणस्य च तदनुवर्तित्वादित्यतः प्रथममाचार्य्यमेव परीक्षेतेत्याह ॥

मेढी आलंबणं खंभं, दिट्ठि जाणसुउत्तमं ॥
सूरी जंहोइ गच्छस्स, तम्हा तं उ परिक्खए ॥ ८ ॥

व्याख्या यद्यस्मात्कारणात् सूरिः सदाचार्यो गच्छस्य गण स्य ( मेढित्ति ) मेढिः खले गोबंधस्थूणा तत्समानो भवति । यथा तया बद्धानि पशुवृंदानि मर्यादया प्रवर्त्तंते तथाचार्य्यो मेढीबद्धो गच्छोऽपि मर्यादया प्रवर्तते इत्यर्थः । तथालंबनं हस्ताद्याधारस्तत्समानः यथा हस्ताद्याधारो गर्तादौ पतज्जंतुं धारयति । तथा ऽचार्य्योऽपि भवगर्ते पतंतं गच्छं धारयतीत्यर्थः । तथा ( खंभंति ) स्तंभः स्थूणा अत्र नपुंसकत्वं प्राकृतत्वादेव तत्समानः । यथा स्थंभः प्रासादाधारः स्यात् तथाचार्य्योऽपिगच्छप्रासादाधारः तथा ( दिट्ठित्ति ) दृष्टिर्नेत्रं तत्समानः यथाजंतोर्नेत्रं शुभाशुभवस्तुप्रदर्शकं भवति तथा ऽऽचार्य्योऽपि गच्छस्य प्रविशुभाशुभप्रदर्शकः स्यात् तथा( जाणं सूत्तमंति ) यानं यानपात्रं सूत्तममतिप्रधानमच्छिद्रमित्यर्थः तत्समानो यथा अच्छिद्रयानपात्रं समुद्रतीरं नयति जंतून् तथाचार्योऽपिगच्छं भवाति तस्मात् प्रथमं तंतुभिनोरवकारार्थ त्वात् तमेवाचार्य्यमेव परीक्षेत गच्छपरिक्षेच्छुः साधुरिति अनुष्टुप्छंदः । एवंचात्र ग्रंथे त्रयोधिकाराः सूचिताः तद्यथा आचार्यस्वरूपाधिकारः १ साधुस्वरूपाधिकारः २ साध्वी स्वरूपाधिकारश्च ३ तत्र प्रथममाचार्यस्वरूपाधिकारं निरूपयितुकामः कैश्चिद्भिः उत्पथस्य उन्मार्गप्रस्थितमाचार्य्यं परीक्षेतेति प्रश्नयन्नाह ॥

भयवं कहिं लिंगेहिं, सूरिं उम्मग्गपट्ठिअं ॥
विआणिज्जा छउमत्थे, मुणि ! तंमे निसामय ॥ ९ ॥

व्याख्या । हे भगवन् ! परमैश्वर्यादिमन्वित ! कैर्लिंगैश्चिन्है रुन्मार्गप्रस्थितमसन्मार्गस्थितं सूरिमाचार्यं छद्मस्थे केवलज्ञानं केवलदर्शनं चात्मनोऽनेनेति छद्म तत्र तिष्ठतीति छद्मस्थस्तं विजानीयात् परीक्षेतेति परप्रश्ने गुरुराह हे मुने ! यैश्चिन्है राचार्यमुन्मार्गप्रस्थितं छद्मस्थः परीक्षेत तन्मे मम कथय इति शेषः ( निसामयत्ति ) त्वं निशामयाकर्णयेति अनुष्टुप् छंदः ॥ ९ ॥ अथ वृत्तद्वयेनपूर्वोक्तशिष्यप्रश्नोत्तरमेवाह ॥

सच्छंदयारिं दुस्सीलं, आरंभेसु पवत्तयं ॥
पुढवाइपडिबद्धं, आउकायविहिंसगं ॥ १० ॥
मुलुत्तरगुणब्भट्ठं, सामायारीविराहयं ॥
अदिन्नालोअणं निच्चं, विकहासु परायणं ॥ ११ ॥

अनयोर्व्याख्या । ॥ स्वच्छंदेन स्वाभिप्रायेण न तु जिनाज्ञया चर तीति स्वच्छंदचारी तं तथा दुष्टं शीलमाचारो यस्य स दुःशील स्तं तथारंभः पृथिव्याद्युपद्रवणानि उपलक्षणत्वात्संरंभसमारंभावपि । तत्र संरंभः संकल्पः समारंभस्तु परितापकरः । उक्तं च ॥

संकप्पो संरंभो, परितावकरो भवे समारंभो ॥
आरंभो उद्दवओ, सुद्धनयाणं तु सव्वेसिं ॥ १ ॥

तत्र स्वान्ययोः प्रवर्त्तकस्तं तथा पीठकमासनं आदिशब्दात् फलकपट्टिकादयस्तत्र प्रतिबद्धः कारणं विनापि ऋतुबद्धकाल तत्परिभोजीत्यर्थः ॥ ग. १ अधि. ॥

( २६ ) परीक्षा आचार्यस्य ॥

सुद्धस्सय पारिच्छा, खुड्डयथेरेयतरुणखज्जूरे ॥
दोमादिमंडलीए, सुद्धमसुद्धे ततोपच्छा ॥

शुद्धस्य परीक्षा कर्त्तव्या कस्मिन्विषये इत्यत आह । क्षुल्लके स्थविरे तरुणे खर्जूरः स्वभावाद्वक्राचारः तस्मिंस्तथाद्वयोरादिमंडल्योः एताभिः परीक्षाभिर्यदि निर्वाहितस्ततः शुद्धः इतरस्त्वशुद्धः शुद्धस्य च गणधरपदानुज्ञा कर्त्तव्या ना शुद्धस्य ततः शुद्धाशुद्धप्रतिपादनानंतरं चोदकं पृच्छा उपलक्षणमेतदाचार्य्यस्य प्रतिवचनं च वक्तव्यं एष द्वारगाथासंक्षेपार्थः । सांप्रतमेनामेव गाथां विवरीषुः प्रथमतः क्षुल्लकविषयं परीक्षाविधिमाह ॥

उच्चफलो अहखुड्डो, सज्झिच्छावोपवासिउं दुक्खं ।
पुट्ठोवि होहिति न वा, पलिमंथो सारवंतस्स ॥

तस्य स्वयंभावपरिच्छेदोपेतस्य गणधरपदयोग्यता परीक्षणाय प्रथमतः क्षुल्लको दीयते । एवं द्विविधामपि शिक्षां त्वं ग्राहय ततः स एव मुक्तः सन् यदि चिंतयति यथा (अहन्ति) एष क्षुल्लकः उच्चं चिरकालभाविफलं यस्मात्स उच्चफलश्चिरकालेनोपकारी तावता कालेन किमपि भविष्यतीति कोवेद ततः कमेनं शिक्षां ग्राहयिष्यति यदि वा शकुनिशावसिवावत्पोष्यः पोष्यते । पुनः पुनर्बुभुक्षाभावादिति भावः । अपि च पुष्टोऽपिमत्येष मम भविष्यति वानवा को न जानाति अन्यच्चामुं धारयतः सारं कुर्वतो मम सूत्रस्य च महान्पलिमंथो व्याघातस्ततो नैतस्य मे शिक्षया प्रयोजनमेवं चिंतयन् येन ग्राहयति सोऽनर्हस्तद्विपरीतो ऽर्हस्ततो यः स्थविर एष प्रवचनोपग्रहकरो भविष्यति इदवेदो वा यथा आचार्यरक्षितः पितेति कारणतो दीक्षितस्तिष्ठति स शिक्षकस्तस्य समर्प्यते एवं द्विविधामपि शिक्षां ग्राहयति तस्मिंस्तत्समर्पिते यदि स इदं चिंतयति ॥

पुट्ठोवा स मरिसति, दुराणुवुत्तो न वेडपडियारो ।
सुत्तत्थे परिहाणी, थेरे बहुयं निरत्थं तु ॥

एष प्रथमाशिक्षादिदापनतः शिक्षाग्राहणतश्च पुष्टीकृतोऽप्याशु शीघ्रं मरिष्यति च शब्दः चिंतांतरसमुच्चये । यदिवा वृद्धः स्वभावात् दुरनुवर्त्य दुः खेनानुवर्त्य तेन वा अत्र वृद्धशिक्षापने कश्चित् प्रतीकारः किमुक्तं भवतिमास्माद्वृद्धात् कश्चित् प्रत्युपकारोऽथवा वृद्धो वृद्धत्वादेव जराक्रांतश्च ततोस्य शिक्षणे मम सूत्रार्थपरिहाणिस्तदेव स्थविरशिक्षा ग्राह्यमाणे बहुकनिरर्थक मिति य एवं चिंतयित्वा येन शिक्षां ग्राहयति सोऽनर्हस्तद्विपरितोऽर्ह इति तदनंतरं योऽसौ तरुणो मेधावी तं समर्प्य भणनं यथा एष मंडलिपरिपाट्या आलापके दीयमाने सीदति तत स्त्वमेतमप्याक्षेपेण पाठय । ततः स इदं चिंतयति ॥

अहियं पुच्छति गिरा, बहुं किं गुणो चरणेण ॥
होहिंति य विवड्ढंतो, एसो मम पडिसपत्ती ॥

एष मेधाविस्वादधिकं पृच्छत्यवगृह्णाति बाबधारयति बहु प्रचुरं तत इत्थमस्यैव सूत्रस्यार्थस्य चरणेण प्रदानत आक णिकतया को गुणो मम निरर्थकः कश्चिदित्यर्थः । केवलं देषो निजसूत्रार्थपरिग्रहणादस्याय एष तु निश्चितं विवर्धमानः सूत्रतोऽर्थतश्च वृद्धिं गच्छन् मम प्रतिसपत्नीव प्रतिपंथी भविष्यति । ततो न कोऽप्येनं पाठयिष्यतीति यो न शिक्षयति सोऽनर्ह स्ततः खज्जुरं दत्त्वा स त्राप्यते । अमुं तया ग्राहय । यत्र सुहुः समाचारीकुशलश्च भवति तत्रो यदि ॥

कोही निरुवगारी, फरुसो सव्वस्स वामवट्टो य ।
अविणीतोत्ति व काउं, हंतुं सत्तं व निच्छुभती ॥

क्रोधी यदि वा निरुपकारी अथवा परुषः परुषभाषी तथा सर्वस्य साधुवर्गस्य वामावर्तः प्रतिकूलतया वर्तते यदि वा अविनीत इति कृत्वा शिक्षां ग्राहयति । अथवा आक्रुश्य शत्रुमिव वा हत्वा निष्काशयतीत्तर्हि सोऽनर्हस्तद्विपरीतोऽर्हः॥
संप्रति चतुर्ष्वपि यो भनेषु तद्विपरीततया यथार्होभवति तथा भावयति ॥

वत्थाहारादीहिं,संगह्र अणुवत्तए य जो जुगलं ॥
गाहेइ अपरितंतो, गाहण सिक्खावए तरुणं॥ १ ॥
खरमउएहि अणुयत्तत्ति, खज्जुरं जेण पक्षइ पासेणं ॥
गाढमवहारविजढो, तत्थोडुणमप्पणो कुणइ ॥ २ ॥

यो नाम युगलं क्षुल्लकवृद्धलक्षणं वस्त्रादाहारादिभिः संगृह्णाति आत्मवशीकरोत्यनुवर्तयति च तरुणमपरिश्रांतः परिश्रममगण यन् ग्राहयति । ग्रहणं ग्राहयंति शिष्य एतदिति वा हुलकात् कर्म ण्यनट्। ग्रहणमाचारादिसूत्रं आसेवनां शिक्षयति तथा खज्जुरं खरमृदुभिर्वाक्यैस्तथानुवर्तयति। येन स पार्श्वे न पतति अन्यथा गतिं न लभते इति मन्यमानस्तद्वशीभवति तथाऽयःस्थानाद पि चक्रर्जापि सन् ऋज्जुकतया विहारविजढो भवति विहारं न करोतीति भावस्तत्र तत्कुणमंगीकारमात्मना करोति । यथेनमहं खरेण मृदुना वोपायेन विहारक्रम कारयिष्यामीति एष एवं भूतोयोग्यः ॥

इयमुव्व सुत्तमंडलिं, दाविज्जइ अत्थमंडलिं चेव ।
दोहिं पि अणरियेंते, देइ गणं चोइए पुच्छा ॥

इत्येवमुपदर्शितेन प्रकारेण चतुर्ष्वपि भनेषु सम्योपदेशतः परीक्षितः सन् शुद्धो भवति न मनागपि दोषः । ततस्तस्य सूत्रमंडली दाप्यते अर्थमंडली च एतयोरपि मंडल्योर्यदि न विपर्येति किल्परिश्रांततया गच्छवासिनां प्रातीच्छकानां च ज्ञाना द्यभिलाषिणां चित्तग्राहको वर्तते ततस्तस्मिन् सूत्राचार्यो गणं ददाति एवमुक्ते चोदकेः चोदकस्य पृच्छा कल्पत आह ।

चोएइ नाणिऊणं, उभयाणिस्स दिज्जइ गणोत्ति ॥
सुत्तेय अणुणायं, जयवं चरणं पक्षिच्छणो ॥ १ ॥
अपरिहाए परिह, परिग्गदं अत्थेण जं पुणो परुवेइ ॥
एवं होइ विरोहो, सुत्तत्थेणं दुवेहंपि ॥ २ ॥

चोदयति प्रश्नयति परायया पूर्वमिदमुक्तं भनयच्छिन्नस्य द्रव्यभावपरिच्छदविशेषात् शाकल्यपरिकलितस्य गणोदीयते । युक्तं चैतत् । यतः सूत्रेऽपि चशब्दोऽपि शब्दार्थः भगवन् आरणं गणधारणमनुज्ञातं । परिग्रहो द्रव्यभावपरिच्छदोपेतमात्रे तत एवमुक्त्वा यदर्हानर्हपरीक्षामर्थेनार्थमाश्रित्य प्ररूपयथाः । नन्वेवं सति द्वयोरपि सूत्रार्थयोर्नर्थति विरोधः । उक्तस्यरूपस्यार्थस्याधिकृतसूत्रेणासूचनात् ॥
अत्र सूरिराह ॥

संति हि आयरिय जगाणि, सत्थाणि चोयग ! सुणाहि ॥
सुत्ताणुन्नातो वि हु,होइ कयाइ अणरिहोउ ॥ १ ॥
तेण पच्छिन्ना कीरइ, सुवणगस्सेव तावनिहसादी ॥
तत्थ इमो दिट्ठंतो, रायकुमारेहिं कायव्वो ॥ २ ॥

चोदक ! शृणु मदीयं वचः संति हि स्फुटं तानि शास्त्राणि याभ्याचार्यस्थितीयकानि किमुक्तं भवत्याचार्यपरंपराया तत्संप्रदाय विशेषपरिकलितानि ततो यद्यप्यर्हानर्हपरीक्षालक्षणोऽर्थः सूत्रे साक्षादोपनिबद्धस्तथापि सूचकत्वात् सूत्रमिति सोऽपि सूत्रे न सूचित इति संप्रदायादवगम्यते इति न कश्चिद्दोषः । तथा च सत्राणुज्ञापि हि निश्चितं कदाचिदनर्हो भवति । नच सूत्रमन्यथा सर्वज्ञप्रणीतत्वात्तेन परीक्षापि सूचितेति । तापनिकषादिभिः सुवर्णस्येव सूत्रानुज्ञानस्याऽपि क्षुल्लकादिभिः परीक्षा क्रियते । तत्रार्थं वक्ष्यमाणलक्षणोदृष्टांतो राजकुमारैः कर्तव्यः ॥
तमेवाह ॥

सूरे वीरे सत्तिए, वत्रमायाधिरे चियायधितिमंते ॥
बुद्धिविणयकरणे, सीसेवि तहा परिच्छाए ॥
निज्जयओरस्स सद्धी, अविसाइपुणो करेंति संठाणं ॥
नवि संमाति देति अणसिस्त्तो उ व उद्घाणुविति य ॥

इहाद्यगाथापदानां द्वितीयगाथापदैर्व्याख्यानं । तद्यथासूरो नाम निर्भयः । सच कुतश्चिदपि न भयमुपगच्छति । वीरश्चौर सवान् तेनाऽक्लेशेन परबलं जयति । सात्विको नाम योमद स्याभ्युदये गर्वं नोपयाति न च गरिष्ठेऽपि समापतिते व्यसने विषादं । तथाचाह । अविषादि उपलक्षणमेतत् अगर्वी वा व्यवसायी अनदक्ष उद्योगवानित्यर्थः । तथाचाह । पुनः करोति संस्थानं । किमुक्तं भवति । प्रमादतः कथंचिद्व्यवसायविकलोऽपि भूत्वा पुनः करोति संस्थां कर्तुमुपक्रमति स्वोचितव्यवसायमिति भावः । स्थिरोनाम उद्योगं कुर्वन्नपि न परितांम्यति तथा चाह । विश्राम्यतीति (वियायत्ति) दानशीलो यथोचित्यमाश्रित्य स्वेभ्योऽन्येभ्यश्च ददातीत्यर्थः।धृतिमान् राज्यकार्याणि कुर्वन् परनिधामनेक्रमाणःतथाचाह (अणिस्सिंत्ति) इति( बुद्धित्ति) औत्पत्तिक्यादिबुद्धिचतुष्टयोपेतः । विनीतो गुर्वादिषु विनयकारी यथौचित्यं गुर्वादीनामनुवर्तक इत्यर्थः।करणे इति यद्राज्ञः कर्तव्यं तत्करणे कुशलः । एतेषु परीक्षा क्रियते किमेते गुणा स्मास्ति न वा। तत्र य एतैर्गुणैरुपेतो भवति । स राज्ञो राज्येऽभिषिच्यते । दानशीलोऽश्रयः स्थिरस्तोऽपरिज्ञातस्तस्मन् कर्तव्यं करोति । कृत्वापि च पश्चादनुपतापी त्यागवान् नाम दानशीलः स च स्तोकादपि स्तोकं ददानो गणस्य बहुमानभाग् भवति ॥

उवसग्गो सोढव्वे, झाये किच्चेसु या विदिसंतो ॥
बुद्धिचउक्कविणीतो, अहवा गुरुमादिविणीतोउ ॥

धृतिमान् उपसर्गान् सोढव्यान् ध्यायति । कृत्येष्वपि कार्येष्वविषादं प्रवर्तते । बुद्धिविनीत इत्यत्र इदमपि व्याख्यानं ।बुद्धि चतुष्टयं नीतं प्रापितमात्मनि येन स बुद्धिविनीतः । सुखादिदर्शनात् क्तांतस्य पाक्षिकः परनिपातः । अथवा ( बुद्धित्ति ) बुद्धिच तुष्कोपेतो विनीतो गुर्वादिषु विनीतः ॥

दव्वाइं जं जत्थ उ,जम्मि विकिव्वं तु जस्स वा जंतु ॥
कव्वइ अहीणकालं, जियकरणविणीयएगत्थ ॥

यद्यत्र द्रव्याद्युपयोगि यस्य वा यत्र यत्कृत्यं तत्सर्वमहीनकाले जितकरणः करोति कारयति । जितकरणो विनीत इति द्वावप्येकार्थौ तात्पर्य विश्रांत्या शब्दार्थस्तु परस्परं भिन्नो जित करणो नाम करणदक्ष उच्यते। विनीत इति विनयकरणशीलः।

एवं जुत्तपरिगा, जुत्तो वेतेहिंमेहिउ अजोगो ॥
आहारादिधरेंतो, तिंतिणिमाईहिं दोसेहिं ॥

एवमेतैरनंतरोदितैः सूत्रादिभिर्गुणैर्युक्ता उचिता या परीक्षा तया युक्तोऽपि निश्चितः पात्रमिदं यमाद्दोषैरयोग्यः । तानेवाह । आहारादि आहारोपधिपूजानिमित्तं गुणं धारयन् तिंतिणयादिभिश्च दोषैरयोग्यः । तिंतिणीनाम यत्र तत्र वा स्तोकेऽपि कारणे करकरायणं । आदिशब्दाच्चलचित्तादिपरिग्रहः ॥ एतदेव व्याख्यानयति ॥

बहुसुत्ते गीयत्थे, भरइ आहारपूयणट्ठाइ ॥
तिंतिणचलअणवट्ठिअ, दुब्बल चरणा अजोग्गो उ ॥

बहुकालोचितं सूत्रमाचारादिकं यस्य स बहुसूत्रो गीतार्थो विदितसूत्रार्थः । एतेन युक्तः परीक्षायुक्तोऽप्येतद्व्याख्यानयति एवंभूतोऽपि यो गणं धारयति ( आहारपूयणट्ठाई ) उत्कृष्टो मे आहारो भविष्यति पूजनं वा स्वपक्षतश्चान्यपक्षतः आदिशब्दादुपधिरन्यच्चोपकरणमुत्कृष्टं मे भविष्यतीत्येवमर्थपरिग्रहः । सोऽयोग्यस्तथा । योऽतितिणः स्वल्पेऽपि प्रयोजने करकरायमाणः । चलश्चलचित्तोऽनवस्थितः स्वप्रतिपन्नार्थानिर्वाही । दुर्बलश्चरणचारित्रविषये दुर्बल एतेऽप्ययोग्याः ।

एवं परिक्खियम्मि, पत्ते दिव्वइ अपत्तिपडिसेहो ।
दुपरिक्खियपत्ते, पुण चारियहावेंति मामेरा ॥

एवमनंतरोदितेषु गुणेषु च यदि परीक्षया निर्वाहितो भवति गुणैरुपेतो दोषैश्च विप्रमुक्त इत्यर्थः। तदा स पात्रमिति कृत्वा तस्मिन्परीक्षिते पात्रे गणो दीयते । यस्तु प्रागुक्तैर्दोषैरुपेतो गुणैश्च विप्रमुक्तः सोऽपात्रमिति तस्मिन्नपात्रे गणदानस्य प्रतिषेधस्तस्मिन् गणो न दातव्य इति भावः ( दुपरिक्खिय ) इत्यादि, अथ कदाचित् स दुःपरीक्षितः कृतो भवेत् गणश्च तस्मै दत्तः स च गणः सीदति तं दृष्ट्वाऽन्येऽपि गच्छवर्त्तिनः केचित् सामाचारीशिथिला भवितुं प्रवृत्तास्ततः परीक्षिते पात्रे गणे प्रदत्ते सति गणोऽवसीदति । ये तत्र गच्छेऽप्यतीवधर्मका न सीदंति तैरुपायेन प्रतिबोध्य वारयितव्यः । तत्र यदि वारणानंतरमावृत्योद्यच्छति ततस्समीचीनमथ वारितोऽपि किंचित्कालमुपेक्ष्य पुनः समाचारीं हापयति । तत इयं मर्यादा कर्तव्या अयं विधिःप्रयोक्तव्य इत्यर्थः । तमेवाह ।

दिट्ठोवसमोसरणे, अहवा येग ताहिं तु वव्वान्ति ।
परिसायघट्ठमट्ठा, चंदणखोमी कंटाणय ॥

यत्र समवसरणं ज्ञायते आचार्योऽत्र प्रवेक्ष्यति । तत्र गच्छोऽनुलोमवचसा प्रवेशनीयः । प्रविश्य तत्र गत्वाऽऽचार्यस्य कथयंति । त्वं सीदन् तिष्ठसि नैव च तद्युक्तं तस्मात् भवगत्या वर्तस्व । अथवा कुलानि हिरुमाना:स्थविरा:सूत्रगच्छ व्रजंति तत्र दृष्टांतैः पर्षदमाधुपरिवाररूपा । घृष्टाः पादघर्षणात् मृष्टाः शरीरस्य केशादीनां च समारचनात् । तत स्तां तथारूपां पर्षदमवलोक्य चंदनखोरदृष्टांतेन खरंटना कर्तव्या साचैवम्

आयरिया दिट्ठंतमेगं सुणंति । एगो इंगालदाहओ इंगालकट्ठाइणं अणेणट्ठाए नदीकूलं गतो तत्थ पासइ । तेण वुज्झमाणं गोसीसचंदणखोडिं सो तं घेत्तूण पारंठितो तमंतरा वणीओ पासइ जाणइ एसा गोसीसचंदणखोडी। ततो तेण सो भणितो किं एएण कट्ठेण तं करिस्सइ । इंगालदाहगो भणइ । दहिऊण इंगाले घेच्छामि । वणिउ चिंतितं । जइ इत्ता हैव मज्जाहामोतो बहुंमुकं मोल्लं काहिति तो जाहे रुहिओ माडवेहिति ताहे किणिहामि । एवं चिंतित्ता जाव वाणिउ मुल्लस्स कएण घरं गंतु एति । ताव तेण दिट्ठा गोसीसचंदणखोडी वाणिएण आगंतुं पुच्छितो । कहिं तं कट्ठं सो भणइ दड्ढंति । एवं भाणिएण खिंसितो महाभाग किंकितो सि इस्सरियत्तणस्स एवं जहा सो इंगालदाहओ सोयवाणियउ ईसरियत्तणस्स चुको । एवं तुमंपि नाणादी दहंतो निव्वाणस्स चुकिहिसि ॥

एतदेवाह ॥

इंगालदाहखोडी, पवेसे दिट्ठाउ वाणिएणं ॥
तुज्झामुल्लं आणयए,इंगालट्ठाए तादिट्ठा ॥ १ ॥
इय चंदणरयणनिभा,पमाय तिक्खेण परसुणा भत्थं ॥
दुविहपडिसेवसिहिणा, तिरियणखोडि तुमे दड्ढा ॥ २ ॥

अंगारान् दहतीति अंगारदाहस्तस्य पार्श्वे गोशीर्षचंदनखोडी प्रवेशग्रामप्रवेशे च वणिजा दृष्टा । स च यावन्मूल्यमानयति । तावत्तेनांगारदाहकेनांऽगारार्थं सा खोडी दग्धा इत्यक्षरार्थः भावार्थस्तु प्रागेवोक्तः सांप्रतमुपनयमाह ॥ इयचंदणेत्यादि । इत्येवममुना प्रकारेण चंदनरत्ननिभा गोशीर्षचंदनसदृशा त्रिरत्न रत्नत्रयरूपा खोडी प्रमादरूपेण तीक्ष्णेन परशुना भित्वा द्विधा या प्रतिसेवा मूलगुणप्रतिसेवा उत्तरगुणप्रतिसेवा चेत्यर्थः । सैव शिखी वैश्वानरस्तेन त्वया दग्धा एवं वारितः सन् यदि निवर्तते ततः प्रायश्चित्तं दत्वा तस्य वर्त्तापकाः स्थविरा दातव्याः । अथ न निवर्तते तर्हि तस्य गणोऽपहरणीयः । न केवलमेतेऽनर्हाः । किं चान्येऽपि तथा चाह ॥

एएण अणरिहेहिं, अन्ने इयसूइया अणरिहातो ॥
के पुणे ते इणमोत्त, दीणादिया मुणेयव्वा ॥

एतैरनंतरोदितैरनर्हैरन्येऽपि खलु सूचिता अनर्हाः । के पुनस्तेसूरिराह । इमे ते वक्ष्यमाणा दीनादयो ज्ञातव्यास्तानेवाह ।

दीणाजुंगियचउरो, जातीकम्मे यसिप्पसारीरे ॥
पाणाडोंबा किणिया, सोवागा चेव जातीए ॥

दीनाःअनर्हाः कस्मादिति चेदुच्यते । तेषां नंदनाभाषा दुक्तंच ॥

दीणाभासं दीणे, गतिं दीणजं पिउं पुरिसं ।
कं पेच्छासि नंदंतं, दीणाए दिट्ठिए तत्थ ॥

जुंगिका हीनाश्चत्वारोऽनर्हाः । तद्यथा जातौ कर्मणि शिल्पे शरीरे च । तत्रजातौ जुंगिकाश्चत्वारस्तद्यथा । पाणा डोंबाः किणिकाः श्वपचाश्च । तत्र पाणानाम ये ग्रामस्य नगरस्य च बहि

राकाशे वसंति तेषां गृहाणामभावात् । गैया येषां गृहाणि संति गीतं च गायन्ति । किङ्किका ये वादित्राणि परिणयन्ति । वध्यानां च नगरमध्ये नीयमानानां पुरतो वादयंति । श्वपचा श्वमांसादा ये शुनः पचन्ति । तंत्रीश्च विक्रीणंन्तीति । एते जाती जुंगिका उपलक्षणमेतत् । तेनायकल्पिका ये च ये च हरिकेशजा तयोमेया ये च वरुडादयस्तेपि जाती जुंगिका द्रष्टव्याः । संप्रति कर्मणि शिल्पे च तानाभिधित्सुराह ॥

पोसगसंवरनडलं,खं वाहमच्छंधरयगवागुरिया ॥
पडगारा य परीसह, सिप्पे सरीरे य वुच्छामि ॥

पोषका ये स्त्रीकुक्कुटमयूरान् पोषयन्ति । संवरास्तानिकाः । शोधकाः नटाः प्रतीता ये नाटकानि नर्तयन्ति । लंखा ये वंशावेरुपरि नृत्तं दर्शयंति । व्याधा लुब्धका मत्स्यबंधाः कैवर्त्ता रजका वस्त्रप्रक्षालका वागुरिका मृगजालिकाजीविनः । एते कर्मणि जुंगिकाः । पटकाराः कुविंदादयश्चर्मकारा इत्यपरे परीषहा नापिता एते शिल्पे जुंगिकाः ॥ संप्रति शरीरे तान् वक्ष्यामि प्रतिज्ञातं निर्वाहयति ॥

हत्थे पाए कछो, नासाउट्ठेहिँ वज्जियं जाण ॥
वामणगमडहकोडिया, काणा तह पंगुला चेव ॥

शरीरे जुंगिकाः जानीहि । हस्ते सप्तमी प्राकृतत्वात् तृतीयार्थे । एवं सर्वत्र । ततोऽयमर्थः । हस्तेन उपलक्षणमेतत् । हस्ताभ्यां वा वर्जित एवं पादेन पादाभ्यां वा कर्णेन कर्णाभ्यां वा नासया ओष्ठेन वा वामनका हीनहस्तपादाद्यवयवाः । मडहाः कुब्जाः कुष्ठव्याध्युपहताः काणाः एकाक्षाः । पंगुलाः पादगमनशक्तिविकला एतानपि शरीरे जुंगिकान् जानीहि ॥

दिक्खेउंपि न कप्पंति, जुंगिया कारणेवि दोसोवि ॥
अण्णादिक्खिएवा, ताउं न करेंति आयरिए ॥

एते अनंतरोदिताश्चत्वारोऽपि जुंगिका दीक्षितुमपि न कल्पंते किंपुनराचार्यपदे स्थापयितुमित्यपि शब्दार्थः । कारणे तथाविधे समुत्पन्ने दोषका निर्दोषा वा दीक्षितुमपि संबध्यंते । अज्ञाताश्चेत्कथमपि जुंगिका दीक्षिता भवेयुः ततस्तान् अज्ञातदीक्षितानज्ञात्वा कुर्वत्याचार्यगुणोपेतानप्याचार्यान् प्रवचनहेलनाप्रसक्तेः ॥

पच्छावि होंति विकला, आयरियत्तं न कप्पई तेसिं ॥
सीसो ठावेयव्वो, काणगमहिसो व निन्नम्मि ॥

पश्चादपि श्रामण्यस्थिता अक्षिगलनादिना विकला भवंति । तेषामप्याचार्यगुणैर्युक्तानामप्याचार्यत्वं न कल्पते । येऽप्याचार्यपदेोपविष्टास्संतः पश्चाद्विकला जायंते । तेषामपि न कल्पते धारयितुमाचार्यत्वं । किंतु तैस्तथा विकलैः सद्भिरात्मनः पदे शिष्यःस्थापयितव्यः । आत्मत्वे प्रकाशे स्थापयितव्यः । क इवेत्यत आह । काणकमहिष इव । निम्ने । इयमत्र भावना । काणकोनाम धारितमहिषो माकोऽप्येन मद्वाक्षीदिति हेतोर्ग्रामस्य नगरस्य वा बहिर्गर्तरूपे निम्ने प्रदेशे उपलक्षणमेतदिति गुपिले वा वनगहने स्थाप्यते । एवमेषो ऽप्यन्यथा च प्रवचनहीलनाप्रसक्तेराज्ञादिदोषप्रसंगश्च । अथ यो वाऽस्मीयः शिष्यः पश्चाद्विकलैराचार्यैः स्थाप्यते । स कीदृश इत्यत आह ॥

गणि अगणी वागीतो, जोवि अगीतोवि या गईमन्तो ।
लोगे स पगासिज्जइ, तहावन्ति नकिञ्चमियरस्स ॥

गणोऽस्यास्तीति गणी साधुपरिवारवान् यो वर्तते तदभावे अगणी । वा यो गीतो गीतार्थः कालोचितसूत्रार्थपरिनिष्ठितः तस्याऽप्यभावे योऽप्यगीतोऽप्यगीतार्थोऽपि आकृतिमान् रूपेण मकरध्वजतुल्यः स गणधरपदे निवेश्यते । यथाऽयमस्माकमाचार्यो नेतर इति । केवलमितरस्यापि जुंगिकाचार्यस्य यत्कृत्यं तत्स्थविरा अन्येऽपि च न हापयंति सर्वमपि कृत्यं कुर्वंतीति भावः । संप्रत्यनर्हान् प्रतिपादयिषुरिदमाह ॥

एयदोस विमुक्कावि, अणरिहा होंति सेउअप्पोवि ॥
अव्वाबाधादीया, तेसिं विभागो उ कायव्वो ॥

एतैरनंतरोदितैर्दोषैर्विमुक्ता अपि भवंत्यन्ये इमे अनर्हाः । के ते इत्याह । अत्याबाधादयस्ततस्तेषामत्याबाधानां विभागः पार्थक्येन स्वस्वरूपवर्णनं कर्तव्यं । प्रतिज्ञातमेव निर्वाहयति ॥

अव्वाबाध अवायन्ते, नेच्छइ अप्पचिंतए ॥
एगपुरिसे कहं निंदू, काकवञ्झा कहं भवे ॥

( अव्वाबाधेत्ति ) अत्याबाध ( आबापन्तेत्ति ) अशक्नुवन् ( नेच्छत्ति ) नेच्छति अनिच्छन् तथा आत्मचिंतकः एते चत्वारोऽपि पुरुषा अनर्हाः न केवलमेतेऽनर्हाः किंत्वेकपुरुषादयोऽपि तत्र शिष्यः प्राह । कथमेकपुरुषो भवति । कथं वा निंदुः कथं वा काकी कथं वा वंध्येति । एवं शिष्येण प्रश्ने कृते सूरिः सकलविनेयजनाऽनुग्रहप्रवृत्तः सर्वानप्यत्याबाधादीन् व्याख्यानयति ॥

अव्वाबाधो वाहइ, मबइविति धरेउमसमत्थो ॥
तइओन चेव इच्छइ, तिसु वि ए ए अणरिहातो ॥

अतिशयेन आबाधा यस्य सोऽत्याबाधः । स गच्छस्य द्विविधेऽप्युपग्रहे वस्त्रपात्रादिज्ञानाद्युपष्टंभरूपे कर्तव्ये बाधां मन्यते द्वितीयोऽशक्नुवन् गणं धारयितुमसमर्थः द्विविधमप्युपग्रहं गच्छस्य कर्तुमशक्त इत्यर्थः । तृतीयोऽनिच्छन् समर्थोऽप्यालस्येन गणं धारयितुं नेच्छति । एते त्रयोऽप्यनर्हाः ॥

आत्मचिंतकमाह ॥

अब्भुज्जयमेगयरं, पडिवज्जिस्सांति अत्तचिंतो उ ॥
जोवा गणे वसंतो, न वहति तत्तीतो अन्नेसिं ॥

आत्मानमेव केवलं चिंतयन् मन्यते यथाऽहमभ्युद्यतं जिनकल्पं यथा छंदकल्पानामेकतरं प्रतिपद्ये इति । आत्मचिंतकः योऽपि गणेऽपि गच्छेऽपि वसन् तिष्ठन् न वहति न करोति तस्मिन्नन्येषां साधूनां सोऽप्यात्मचिंतकः । एतौ द्वावप्यात्मचिंतकावनर्हौ ॥

एगं मज्जति सिस्सं, पाणच्छेद्दे मरंति विध्दंसंते वा ॥
अवमयस्स य एवं, नवरं पुणय एए गो पाणत्ति ॥

पंचम एकपुरुष एकं शिष्यं मृगयते सहायं चिंतयंति । किमप्येकमात्मनः सहायं मृगयामि । येन सुखं तिष्ठामीति तथा कष्टे निंदुतुल्याः शिष्या म्रियंते विध्वंसते वा प्रतिभज्यंते वेति भावार्थः । इयमत्र भावना । यथा निंदुमहिला यद् यदपत्यं प्रसूते तत्तन्म्रियते । एवं योऽपि यं प्रव्राजयति स स म्रियते अपगच्छति वा ततः स निंदुरिव निंदु । सप्तमस्यापि काकीतुल्यस्य एवमेव रूपव्यं । नवरं पुनरेकं तिष्ठति किमुक्तं भवति । यस्यापि यः शिष्यः स म्रियते विध्वंसते वा केवलमेकः तिष्ठति । उपलक्षणमेतत् । न चैतदपि रूपव्यं । यस्यैकस्मिन्

प्रव्राजिते सति द्वितीयादयपि अविद्यव नास्ति स काकीव काकी काकयापि हि किञ्चिदेकं वारं प्रसूते इति प्रसिद्धिः। वंध्यातुल्यः सुप्रतीत इति न व्याख्या तदेवदं व्याख्यानं । वंध्या क्रियाप्रसवधर्मा एव यस्य नैकोऽपि शिष्य उपतिष्ठते। स वंध्येव वंध्येति । पुनरन्यानानर्हान् प्रतिपादयिषुरिदमाह ॥

अहवा इमे अणरिहा, देसाणं दरिसणं करेंतेणं।।
जेपव्वावियतेणं, थेरादि पयच्छति गुरूणं ।।

अथवेति । अनर्हानामिव प्रकारांतरतापदर्शने इमे वक्ष्यमाणा अनर्हास्तानेवाह । देशानां दर्शनं कुर्वते। तेन ये प्रव्राजिकाः स्थविरादयस्तान् प्रयच्छति गुरूणां न तरुणादीन् पूर्वे बहुवचनमनेकव्यक्त्यपेक्षयेत्यदोषः । स्थविरादीनेवाह।

थेरे अणरीहे सीसे, खज्जूदे एगसंजिए ।।
उक्खोवगयसिरिए, पये कालगते इय ।।

यः स्थविरान् प्रयच्छति शिष्यान् यो वानर्हान् ये वा खज्जूरान् यदि वा एकाग्रंभिकानथवा य एकं प्रधानं शिष्यमात्मना सजते गृह्णाति शेषांस्त्वाचार्यस्य समर्पयति । स एकाग्रेन चरतीति एकाग्रभिकः। यो वा शिष्या उत्क्षेपको यश्चाचार्यो नामत्वरिकान् शिष्यान् करोति । यो वा गुरुसंवर्धिनः शिष्यान् पथि कालगतान् चशब्दात् प्रतिभग्नान् कथयति । एते सर्वेऽप्यनर्हास्तत्र स्थविरादीन् व्याख्यानयति ॥

थेराउ अतिमहल्ला, अणरिहा काणकुंटमादीया ।।
खज्जमाय अवसत्ता, एगाभंजी पहाणा उ ।। १ ।।
तं एगं न वितरीअ, विंसेसे देइ जे गुरूणंतु ।।
अहवा वि एगदव्वे, लज्जंति जे ते देइऊगुरूणं ।। २ ।।

स्थविरानाम अतिमहांतो वयसाऽतिगरिष्ठा इत्यर्थः । अनर्हाः काणकुंटादयः खज्जूरा अवश्याः। अयमत्र भावार्थः योऽस्मै पूर्वं परीक्षितः स देशादर्शनं कार्यते । तेन च देशादर्शनं कुर्वता यदि ये स्थविराः प्रव्राजिता ये च जुंगिताः ये च खज्जूरा या ते आचार्यस्य समर्प्यन्ते तदा न व्यक्ताः विनीताश्चात्मनस्तदा सोऽनर्हः इति। एगाभंजिनां यः प्रधानः शिष्यस्तमेकं योन ददाति अवशेषांस्तु सर्वानपि प्रव्राजितान् गुरूणां प्रयच्छति । अथवा यथा मेककग्राग्नो यथा यदि नकं लभते ततो वस्त्रादीनि न अथ वस्त्रादीनि लभते तर्हि न भक्तमपि एकमेव लभते इत्येवं शीला एकलाभिनस्तया चाह।अथवा ये एकं द्रव्य लभंते तान् शिष्यान् गुरूणां यः प्रयच्छति। उभयलब्धिकानात्मनः संबंधयति सोऽप्यनर्हः ॥

उक्खोवणं देतिमि वा, विउवणाति मे समप्पणो ।।
आयरिया णित्तेरियं, बंधइ दिसमप्पणो वकहिं ।।

इयं किल समाचारी यावंतः किल देशादर्शनं कुर्वता प्रव्राजिताः तावंतः सर्वे गुरूणां समर्पणीयाः यस्तु प्रव्राजितान् द्विधा कृत्वा कांश्चित् उत्क्षेपेण हस्तोत्पाटनेन चैत्रीन् वा शिष्यान् गुरूणामुपनयति शेषान् सर्वानप्यात्मना गृह्णाति एषो क्षेपकोऽनर्हः ॥

तथा ये के च न देशादर्शनं कुर्वता प्रव्राज्यंते ते सर्वेऽप्यात्मन इत्वरिका बंधनीयाः। यथा आचार्यसमीपं गता यूयं सर्वेऽप्याचार्यस्य यत्पुनराचार्याणां दिशामित्वरिकां बध्नाति । आत्मनस्तु यावत्कथिकां यथा यावत् यूयमाचार्यसमीपे तिष्ठत तावदाचार्यस्य शेषकाले ममेत्येवमित्वरिकान् कतिशिष्यान् सोऽप्यनर्हः ॥

पर्यमियकालगया, पडिभग्गा वाविगुरुज जे सीसा ।
एए सव्वे अणरिहा, तप्पडिवक्खा भवे अरिहा।।

यो देशादर्शनं कृत्वा समागतः सन् ब्रूते युष्माभिर्ये साधवः परिवारतया ते सर्वे युष्माकं शिष्याः पथि कालगताः प्रतिभग्ना वा इमे पुनः सर्वे मम शिष्या एते स्थविरादयाऽनर्हाः तेषां पुनरनर्हाणामाचार्यसमीपगतानां ये तैः प्रव्राजिता शिष्यास्तानाचार्ये स्थापयति वा न वा गुरूणामप्रेक्षणप्रमाणः।। व्य. १ खं. ३ उ. ॥

( २७ ) उद्देशः मैथुनादिप्रतिसेव्याचार्यत्वे न ।।

मैथुनप्रतिसेवने त्रिवर्षोऽन्यन्तरे आचार्यत्वञ्च कल्पत इत्यत्र प्रमाण ( मुद्देस ) शब्दे ।

( २८ ) स्थापनाविधिराचार्यपदे गुरोः ।।

आचार्यपदेऽन्यस्थापनाविधिश्च ।।

कहंणंभंते!आयरियस्स ठवणाविही वियाहिया जंबू! जे आयरिया विहिपुव्वं समाउ आयरियेणं पट्ठाविया तेवि आयरिया तत्थ एगे नामायरिया दव्वायरिया ठवणायरिया भावायरिया । जंबू! जे भावायरिया ते तित्थयरसमा। अहवा तओ आयरिया पण्णत्ता सिप्पायरिया कलायरिया धम्मायरिया जे तअधम्मायरिया परलोगगाहयट्ठाए निजरट्ठाए आराहेयव्वा । अन्ने कलायरिया सिप्पायरिया एकडणहिं वित्ति वुड्ढिए आराहियव्वे। तत्थेगे धम्मायरिया सोवायकरंडसमा वक्खाइकथयप्पयगाहाईहिं जे सुद्धसज्झाए वक्खाणिंति ते सोवागकरंडसमा। वेसाकरंडसमाजो रीआहारणसरिसजीहावक्खाणरूवरेणं अंतरं सुत्तमारविरहिया विसुद्धसज्झाए जणं विमोहिंति णेरविंति अप्पाणं युतंसि आलुच्च अणत्थे पाडिंति गोयमा! गणहराणं उवमाएतेसमाकरंडसमा गाहावइकरंडसमा जे सम्मं समुवसियसुगुरुहितो संपत्त अंगोवंगाइसुत्तथे सुपरिच्छिय ससमयपरसमयणिच्छया परोवयारकरणिकजल्लिच्छया जणजोगाविहीए अणुओगं करिंति । ते गाहावइकरंडसमा रायकरंडसमा जे गणहरा चउदसपुव्विणोवा धरूाओ धरूसयं पकाओ परूसयं इच्चाइं विहाइं सयसमणिया ते रायकरंडसमा गाहावइकरंडसमाणे रायकरंडसमाणे दोविए आयरिए तित्थयरसमाणे तेसिं ठवणविहि गाहावंधो ।।

जइगुण १ काल २ णिसिज्जा ३ विज्ज ४ चंद ५ समा ६ नंदि ७ सगच्छोत्ता ८ मंत ९ रक्ख १० णाम ११ वंदण १२ अणुसट्ठिं १३ निरुद्ध १४ गणगुणा १५ संगा १६ संगहणीगाहा ।।

अठवरिसदिक्ख वारसु, सुत्ते अत्थे य वायगत्तेय ।

पणयालीसपरिसगुण, जुत्तोसूरिपयजुग्गे ॥ २ ॥
देसकुलं पसिद्धि, छत्तीसगुणगणालंकिओ दढचरित्ते ।
जयणाजुत्तो संघस्स, सम्मओ मुक्खकंखी य ॥ ३ ॥
कालाइव साइकाइ, गुणविहीणो विसुध्दलीयत्थो ॥
ठाविज्जइ सूरिपए, उज्जुत्तो सारणाइसुं ॥४॥
सुगुणजावे न पुणो, गुणपरिहाणी ठविज्जए सूरी ॥
अप्पत्ते सूरिपयं, दिंतस्स गुरुस्स गुरुदोसो ॥ ५ ॥
जउचंबूदो गणहरस्स, दोगंथमाईहिं धीरपुरिसेहिं ॥
जोतं ठवइ अपत्ते, जाणंतो सो महापावो ॥ ६ ॥
कहं नासेइ अगीअत्थो, चउरंगं सव्वओ असारंमं ॥
नढ्ढम्मिअ चउरंगेण, हु सुलहं होइ चउरंगं ॥ ७ ॥
नासेइ संवेगो, चउरंगं सव्वओ य सारंगं ॥
नढ्ढंमिय चउरंगेण, हु सुलहं होइ चउरंगं ॥ ८ ॥

एयाए विहीए सुसीसस्स परिक्खा काऊण दुसमसमया-णुजावेणं पसत्थे तिहिनक्खत्तमुहुत्ते अहिए पाजाइ अकाले पट्ठविए गुरूसीसे सिज्झाए करित्ता पसत्थजिणजवणा इखित्ते अक्खए गुरुजुगे निसिज्जादुगे कातव्वे अणुओ-गाणुप्पवणत्थं किपलोयस्स सीसस्स सिरे गुरुणो वासं घे ति मंतिऊण सीसे खिवति। सुसीसस्स से तओ पुव्वविहीए देवे वंदावेइत्ता अणुओगाणुण्णवणत्थं काउस्सग्गं किरइ। सत्तावीसुस्सा संपुत्रोवि गुरुसीसा तओपयकं चउवीसं थुतं पढित्ता वारत्तिगं पंचमंगलुच्चारं करेंति । सुच्चट्ठिया । गुरु अओवा अक्खलियाइगुणोपवेयं नंदिसुत्तं कड्ढेइ । बुद्धसीसो अहोणयकायजजेोमकरकमलकुमलोपवड्ढमाणसंवेगो सु णेइ। तओ सीसो वंदितो जणइ इच्छयारिंजंते!तुम्हे अणुओ गं जाणह तओ गुरु जणइ अहमेअस्स साहुस्स दव्वगुण पज्जवेहिं खमासमणाणं हत्थेणं अणुओगं अणुजाणामि विए संदिसह किं जणामि। वंदित्ता पवेयह तइए इच्छ यारि तुम्हे अम्हं अणुओगो अणुण्णाउं । इच्छामो अणुसट्ठिंति सीसेण जणिए गुरु जणइ । संम्मं अवहारे पव्वं अन्नेसिं पवेयहचउत्थे तुम्माणं पवेइयं संदिसह साहूणं पवेएमि पंचमेय इक्कणमुक्कारेण समोसरणं च गुरुं च पयक्खिणेइ एवं तिन्नि वारा छट्ठेण तुम्हाणं पवेइउ साहूणं पवेइऊं संदिसह काउस्सग्गं करेमि । सत्तमे अणुओगाणु जाणावणियं करेमि काउस्सगमिच्चाइणा उवसग्गे कए गुरुसमप्पिय णिसिज्जा जुओ गुरुं तिपयक्खिणीकरिय वंदित्ता गुरुदाहिणओ उच्चआसणे निसिज्जाए णिसी अइ। तउ णिसन्नस्स लग्गवेलाए दाहिणसवणे गुरुपरंपरा गयमंतपए तिन्निवारे परिकहेइ। तओ वद्धत्तिया उ तिन्निअ क्खमुट्ठिओ देइ करयलपुडे सीसो ताओ उवउत्तो गिह्णइ। तओ गुरू तस्स नामं कारिय णिसिज्जाओ उट्ठेइ। सीसो तत्थ णिसीयइ अहा सन्निहीयसंघसहिओ गुरू तस्स वंदणं देइ। इयं च तुल्यगुणाख्यापनार्थमुजयोरपिन दोषाय । यदाह। आयरियनिसिज्जाए उवविसणं वंदणं च तह गुरुणो तुल्लगुणाक्खायणत्थं ण तया दुट्ठं दुव-एहंपितउ वक्खाणं करेहत्ति। गुरुणा वुत्ते तत्थट्ठिओ चेव अहिणवसूरी नंदिमाइयं परिसाणुरूवं वा वक्खाणं क रेइ। तस्समत्तीए य संघो तं वंदइ। तओसोवि णिसिज्जाउ उट्ठेइ गुरुवो तत्थ णिसित्ता उववूहंति। यथा आयणीपुव्वे दसमस्लिलोगबंधेण सिक्खा दिंति।

नमोऽर्हत्सिध्दाचार्योपाध्यायसर्व्वसाधुज्यः ।
यथा । धन्यस्त्वं येन विज्ञात, स्संसारगिरिदारकः ॥
वज्रवदुर्निदश्चार्य, महाजाग ! जिनागमः ॥ १ ॥
इदं चारोपितं यत्ते, पदं तत्संपदां पदम् ॥
श्रीगौतमसुधर्म्मादि, मुनिसिंहनिषेवितम् ॥ २ ॥
धन्येज्यो दीयते जद्र, ! धन्या एवास्य पारगाः ॥
धन्या गत्वाऽस्य पारन्तु, पारं गच्छंति संसृतेः ॥ ३ ॥
जीतं संसारकांतारा, त्साधुवृन्दमिदं मुदा ॥
विमोचने समर्थस्य, जवतश्शरणागतं ॥ ४ ॥
अतो विधेयं यत्नेन, सारणावारणादिना ॥
अपायपरिहारेण, संसारारण्यपारगं ॥ ५ ॥
एवं तं उववूहिअ विणेयजणोवि अणुसासियव्वो। यथा।
गुणज्ञानेरपि नैवेव, सुस्थबोधिस्यसन्निजः ॥
संसारसागरोत्तारी, विमोक्तव्यः कदाचन ॥ १ ॥
प्रतिकूलक्र कर्तव्य, मनुकूलरतैः सदा ॥
ज्ञाप्यमस्य गृहत्यागो, येनवस्सफलो जवेत् ॥ २ ॥
अन्यथा लोकबंधूना, माज्ञालोपः कृतो जवेत् ॥
ततो विरुंबना घोरा, जवेदिह परत्र च ॥ ३ ॥
ततः कुलवधून्यायात्, कार्य्ये निर्न्नेर्त्सितैरपि ॥
यावज्जीवं न मोक्तव्यं, पादमूलममुष्य जोः ॥ ४ ॥
ते ज्ञानजाजनं धन्या, स्तेहि निर्म्मलदर्शनाः ॥
ते निष्पकंपचारित्रा, ये सदा गुरुसेविनः ॥५ ॥

इदं अणुसट्ठिं काउं दोवि निरुध्दं करेंति दोवितज्झा-यस्स कालस्सय पडिक्कमंति । आयरियं पंचएए अइ सया ववहारगत्थे अभिहिया ॥

जत्ते पाणे धोवणए, पसंसणा हत्थपायसोए य ॥
आयरियअइसेसा, णइसेसा होंत णायरिया ॥ १ ॥
उप्पन्ननाणा जहनो अकंती, चुत्ती सबुध्दा इसया जिणिंदा।
एवं गणी अट्ठगुणोववेओ, सत्थावनो हिं करइहिमंतु ।२।
गुरुहिं कणामि गुरुणा, वसजे लहुणा णिवारयंतंमि ॥
गीयागीयगुरुसहु, आणाइआ बहूदोसा ॥ ३ ॥

पंचविश्रायरियाइ,पच्छंति अहवए वि संथरणे ॥
एवं पसत्थयंतो, सयमेव गणी अरुइ गामे ॥ ४ ॥

इच्चाइगुणजुत्तस्स दुच्चेयद्धविरियस्स वा गणानुज्ञां करोति । तत्थय सकरुणो पवयणाणुरागीय एवं वि खमासणपुव्वं सीसो जणइ । इत्थयारि तुम्हे अम्हदिसाइ अणुजाणावणियं नंदिकारावणियं वासणिक्खेवं करेह इच्चाइ पुव्वुत्तविहीए चेइवंदणं चेइवंदणपुव्वं काउसग्ग करणं नंदिमुत्तस्स कड्ढणं गंधदाणं सत्तखमासणदावणं तओ उस्सग्गाणंतरं सूरिसमीवे उवविट्ठस्स अजिणवगणहरस्स साहुणीओ वंदणयं दिंति । तओ तस्सायरियस्स सीसे हत्थं दाऊणं सासणं देइ ॥ तंजहा ।
संपारिऊण परमे,पायाइ दुविहियत्तायणसमत्थो ॥
जवजयजलियणदहं,ताणं जो कुणइ सो पत्तो ॥ १ ॥
अत्राणवाहिगहिया, जइवि न सम्मं इहातुरा हुंति ॥
तहवि पुण भावविज्जा, तेसिं अवणंति तव्वाहिं ॥ २ ॥
तातंसि भावविज्जो, भवदुक्खनिवडियातुम्हं ॥
एए हुंदिसरणं, पत्ता मोएयव्वा पयत्तेणं ॥ ३ ॥
गच्छस्स सिक्खदाणं पुण एवं ॥
तुब्भेहिं पिण एसो, संसाराडविमहाकम्मीडम्मि ॥
सिद्धिपुरसत्थवाहो, जत्तेण सया ण मुत्तव्वो ॥ ४ ॥
नाणस्स होइ भागी, थिरयरओ दंसणे चरित्तेय ॥
धन्ना आवकहाए, गुरुकुलवासं ण मुंचन्ति ॥ ५ ॥
एवं चिय समणीणं, अणुसट्ठिं कुणइ इत्थ आयरिओ ।
तह अज्जचन्दणमिगावइ, णासा होइ परमगुणा ॥ ६ ॥
एवं उवणाविहीए, ठविया जे हवन्ति आयरिया ॥
विहिवहिया आणायरिया, जणिया सिरिवीरणाहेणम् ॥ ७ ॥ अंग. चू. । ध. ३ अधि. ॥

नूतनाचार्य्यस्थापनविधिर्गुरुशिष्ययोरनुशासनं च पंचवस्तुके यथा ॥

एत्थाणुजाणणविही, सीसं काऊण वामपासम्मि ।
देवे वन्देइ गुरू, सीसो वन्दिओ तो जणइ ॥ ३६ ॥

व्याख्या ॥ अत्र प्रक्रमे अनुज्ञाविधिरयं शिष्यं कृत्वा वामपार्श्वे आत्मनः देवान्वन्दते । गुरुराचार्य्योऽशिष्यो वंदित्वा अत्रांतरे ततो जणति वक्ष्यमाणमिति गाथार्थः ॥ ३६ ॥

इच्छाकारेणम्हं, दिसाइ अणुजाणहत्ति आयरिया ।
इच्छामोत्ति जणित्ता, उस्सग्गं कुणइओ तयत्थं ॥ ३७ ॥

व्याख्या । इच्छाकारेण स्वेच्छया क्रिययाऽस्माकं दिगाद्यनुज्ञानीतेति जणति अत्रांतरे आचार्य इच्छामि इति भणित्वा तदनंतरं कायोत्सर्गं करोति तदनन्तरं दिगाद्यनुज्ञार्थमिति गाथार्थः ॥

चउवीसत्थयपनवकार,पारणं कड्ढिऊणयं ताहे ।
नवकारपुव्वयं चि अ, कड्ढइ अणुसणंदित्ति ॥ ३८ ।

व्याख्या । चतुर्विंशतिस्तवपाठनमस्कारपारणं नमोरिहंताणमिस्येवमाकृष्य पठित्वा स्वयं पूर्वोक्तं ततो नमस्कारपूर्वकमेवाकर्षति । पडत्यनुज्ञानंदीमिति गाथार्थः ॥

सीसो वि भाविअप्पा, सुणेइ जइ वंदअं पुणो जणइ ।
इच्छाकारेणम्हं, दिसाइ अणुजाणह तहेव ॥ ३९ ॥

व्याख्या । शिष्योऽपि जावितात्मा सन् शृणोत्युपयुक्तः अथ वंदित्वा पुनर्भणति शिष्यः । इच्छाकारेणास्माकं भगवन् ! दिगाद्यनुजानीत तथैव जणतीति गाथार्थः ॥

आह गुरु खमासमणां, हत्थे णिम्मस्स साहुस्स ।
अणुजाणिअं दिसाई, सीसो वंदित्तु तो जणइ ॥ ४० ॥

व्याख्या । आह गुरुस्तत्रांतरे क्षमाश्रमणानां हस्तेन क्षमनीयमानस्य साधोः प्रस्तुतस्यानुज्ञातं दिगादिप्रस्तुतं शिष्यो वन्दित्वा अत्रांतरे ततो जणति वक्ष्यमाणमिति गाथार्थः ॥

संदिसह किं जणामो, वन्दितु पवेअह गुरू जणइ ।
वंदित्तुपवे अयई, जणइ गुरुतत्थ विहिणाओ ॥ ४१ ॥

व्या. ॥ संदिशति किं जणामि अत्र प्रस्तावे वंदित्वा प्रवेदयेत गुरु जणति वंदित्वा प्रवेदयति शिष्यो जणति गुरुस्तत्रविधिना तु वक्ष्यमाणमिति गाथार्थः ॥

वंदितु जणइ तुम्हं, पवेइयं संदिसह साहूणं ।
एवं सीसोजणइ, जणइ गुरू पवेयह तओउ ॥ ४२ ॥

वंदित्वा जणति ततः किमित्याह । युष्माकं प्रवेदितं संदिशत साधूनां प्रवेदयामि एवं भणति शिष्यः । अत्रांतरे गुरुराह प्रवेदय ततस्तु तदनंतरमिति गाथार्थः । किमित्याह वंदित्वा जणति ततः किमित्याह । युष्माकं प्रवेदितं संदिशत साधूनां प्रवेदयामि एवं भणति शिष्यः । अत्रान्तरे गुरुराह । प्रवेदय ततस्तु तदनन्तरमिति गाथार्थः ॥ किमित्याह ॥

वन्दितु णमोकारो, कड्ढंतो से गुरुं पयक्खिणइ ॥
सो वि अ देवाईणं, वासो दाऊण तो पच्छा ॥ ४३ ॥

व्या. ॥ वंदित्वा नमस्कारमाकर्षन् सशिष्यो गुरुं प्रदक्षिणी करोति सोऽपि च गुरुर्देवादीनां वासान् दत्वा ततस्तदनन्तरं पश्चादिति गाथार्थः ॥ किमित्याह ॥

सीसंमि पक्खिवन्तो, जणइ तं गुरु गुणेहिं वड्ढाहिं ।
एवं तु तिण्णिवारो, उवविसइ तओ गुरूपच्छा ॥ ४४ ॥

व्याख्या । शिरसि प्रक्षिपन्त्वा वासान् भणति तं साधुं गुरुगुणैर्वर्धस्वेति एवमेव त्रीन् वारानेतदुपविशति । ततस्तदनंतरं गुरुः पश्चादिति गाथार्थः ॥

सेसं जह सामइए, दिगाइ अणुजाणणाणिमित्तं तु ।
णवरं इह उस्सग्गो, उववसइ तओ गुरुसमीवे ॥ ४५ ॥

व्या. शेषं प्रादक्षिण्यादि तथा सामायिके तत्रैव द्रष्टव्यं दिगाद्यनुज्ञानिमित्तं तु नवरमिह कायोत्सर्गो नियमतएव उपविशति ततो गुरुसमीपे स साधुरिति गाथार्थः ॥

दिंति अ नो वंदणयं, सीसाइ तओ गुरू वि अणुसट्ठिं ।
दोएहवि करेइ तह जह, अण्णोवि अमुइअं कोई ॥ ४६ ॥

व्या. ददति च ततो वंदनं शिष्यादयः सर्वे एव ततो गुरुरप्यनुशास्ति मौलः द्वयोरपि गच्छगणधरयोः करोति । तथा संवेगसारं यथाऽन्योऽपि च सत्वो बुध्यते कश्चिदिति गाथार्थः ॥

गणधरानुशास्तिमाह ॥

उत्तममिअं पयं, जिणवरेहिं लोगुत्तमेहिं पण्णत्तं ।
उत्तमफलसंजणयं, उत्तमजणसेविअं लोए ॥ ४७ ॥

व्या. उत्तममिदं गणधरपदं जिनवरैर्लोकोत्तमैर्भगवद्भिः प्रज्ञप्तमुत्तमफलसंजनकं मोक्षजनकमित्यर्थः । उत्तमजनसेवितं गणधराणामुत्तमत्वाल्लोक इति गाथार्थः ॥

धएणाण णिवेसिज्जइ, धएणागच्छंति पारमेअस्स ।
गन्तुंइमस्स पारं, पारं वच्चंति दुक्खाणं ॥ ४८ ॥

व्या. धन्यानां निवेश्यते एतद्धन्या गच्छन्ति पारमेतस्य विधिना परंपारं व्रजंति दुःखानां । सिध्यंतीति गाथार्थः ॥

संपाविऊण परमे, णाणाइ दुक्खिआण तायणसमत्थे ।
जवजयज्ञाअणे दढं, ताणं जो कुणइ सोधन्नो ॥४९॥

व्या. संप्राप्य परमान् प्रधानान् ज्ञानादीन् गुणान् दुःखितत्राणसमर्थान् । किमित्याह । जवभयजीतानां प्राणिनां दृढं त्राणं यः करोति सधन्यो महासत्त्व इति गाथार्थः ॥

अएणाणवाहिगहिआ, जइवि न सम्मं इहाउरा होंति ।
तहवि पुणजावविज्जा, तेसिं अवर्णिति तंवाहिं ॥ ५० ॥

व्या० ॥ अज्ञानव्याधिगृहीताः सन्तो यद्यपि न सम्यगिहातुरा भवंति व्याधिरोगास्तथापि पुनर्भाववैद्यास्तात्त्विकास्तेषामपनयंति व्याधिमज्ञानलक्षणमिति गाथार्थः ॥

तातंमि जावविज्जा, जवदुक्खनिवीडिया तुहंएए ।
हंदिसरणं पवएणा, मोएअव्वा पयत्तेणं ॥ ५१ ॥

व्या० ॥ त्वमसि भाववैद्यो वर्त्तसे भवदुःखनिपीडिताः संतस्तवैते साध्वादयः हंदिसरणं प्रपन्नाः प्रव्रज्यादिप्रतिपत्त्या मोचयितव्याः प्रयत्नेन सम्यक्स्वकारणेनेति गाथार्थः ॥

मोएइ अप्पमत्तो, परहिअकरणंमि णिच्चमुज्जुत्तो ।
जवसोक्खापडिबद्धो, पडिबद्धो मोक्खसोक्खंमि ॥५२॥

व्या० ॥ मोचयति चाप्रमत्तः सन् परहितकरणे नित्योद्युक्तो य इति । जवसौख्याऽप्रतिबद्धोनिस्पृहः । प्रतिबद्धो मोक्षसौख्ये नान्यत्रेति गाथार्थः ॥

ताएरिसो वि अतुमं, तह वि अ जणिओ सिमयणीईए ।
णिअयावत्थासरिसं, जवयाणिच्चं पि कायव्वं ॥५३ ॥

व्या. । तदीदृश एव त्वं पुण्यवांस्तथापि च भणितोऽसि मया समयनीत्या करणेन निजावस्थासदृशं कुशमेव भवता नित्यमपि कर्त्तव्यं नान्यदिति गाथार्थः । गच्छानुशास्तिमाह ।

तुब्भेहिं पि न एसो, संसाराडविमहाकडिल्लंमि ।
सिद्धिपुरसत्थवाहो जत्तेण खणंपि मोत्तव्वो ॥ ५४ ॥

व्या० युष्माभिरपि नैव गुरुः संसाराटवीमहाकडिल्ले गहने सिद्धिपुरसार्थवाहः तत्रानपायनयनाद्यत्नेन क्षणमपि मोक्तव्यो नेति गाथार्थः ॥

ण य पडिकूलेअव्वं, वयणं एअस्स नाणरासिस्स ।
एवं गिहवासचागो, जं सफलो होइ तुम्हाणं ॥ ५५ ॥

व्या. ॥ न च प्रतिकूलयितव्यमशक्त्या वचनमेतस्य ज्ञानराशेर्गुरोरेवं गृहवासत्यागः प्रव्रज्यया यत्सफलो भवति युष्माकमाज्ञाराधनेनेति गाथार्थः ॥

इहरा परमगुरूणं, आणाजंगो निसेविउ होइ ।
विहला य होंति तं मि, निअमाइइलोअपरलोआ ॥५६॥

व्या. ॥ इतरथा तद्वचनप्रतिकूलत्वेन परमगुरूणां तीर्थकृतामाज्ञाभंगो निषेवितो भवति । निष्फलौ च भवतस्तस्मिन्नाज्ञाभंगे सति नियमादिहलोकपरलोकाविति गाथार्थः ॥

ताकुलवहुणाएणं, कज्जे निब्भच्छिएहिं विकाहिंचि ।
एअस्स पायमूलं, आमरणंतं न मोत्तव्वं ॥ ५७ ॥

व्याख्या । तत्कुलवधूज्ञातेनोदाहरणेन कार्ये निर्भर्त्सितैरपि सद्भिः कथंचिदेतस्य गुरोः पादमूलं समीपमामरणांतं न मोक्तव्यं सर्वकालमिति गाथार्थः । पं. व. ४ द्वा. ॥

नूतनाचार्यस्थापने गुरुशिष्ययोरनुशासनं ( जिनकल्पिक ) शब्देऽपि ॥

( २९ ) परिच्छदसहितस्यैवाचार्यत्वम् ॥

आचार्यस्य गणधारणे परिच्छदावश्यकता । तथा च व्यवहारसूत्रम् ॥

जिक्खू इच्छेज्जा गणं धारित्तए जगवं च से अपलिच्छिएणेएवं सेनो कप्पइ गणं धारित्तए जगवं च से पलिच्छन्ने एवं से कप्पइ गणं धारित्तए ॥

व्याख्या ॥ जिक्षुशब्दः आचार्यपदयोग्यानेकगुणसमुच्चयार्थः । इच्छेत् गणं धारयितुं । भगवांश्च ( से ) तस्य भिक्षोरपि परिच्छदः परिच्छदरहितः । परिच्छदश्च द्विधा द्रव्यतो भावतश्च । तत्र द्रव्यतः परिच्छदः शिष्यादिपरिवारः भावतः सूत्रादिकं । तत्र भगवानाचार्योऽपरिच्छन्नो द्रव्यतो भावतः पुनर्नियमात्सपरिच्छदोऽन्यथाचार्यत्वायोग्यात् । चशब्दाद्भिक्षुश्च द्रव्यतो परिच्छदो भावतः सपरिच्छदः परिगृह्यते एवं से इत्यादि एवममुनाप्रकारेण(से) तस्य न कल्पते गणं धारयितुमेवं शब्दो विशेषद्योतनार्थः । सचामुं विशेषं द्योतयति । आचार्ये द्रव्यतोऽपरिच्छदे भिक्षोः सपरिच्छदस्य । न कल्पते गणं धारयितु मिति । भगवांश्च ( से ) तस्य द्रव्यतोपि परिच्छन्नः परिच्छदोपेतश्चशब्दात्सोपि च द्रव्यतोपि परिच्छन्नस्तत एवं ( से ) तस्य कल्पते गणं धारयितुमिति विशेषद्योतनार्थः । भाष्यकारोव्याख्यानयति ॥

थेरे अपलिच्छन्ने, सयंपि वग्गहणा तत्थ ।
छन्नो थेरो पुण वा, इअरो सीसो जवे दोहिं ॥

स्थविरोनाम आचार्यः असावेव पूजावचनेन भगवच्छब्देनोच्यते । भगवानिति महात्मनः संज्ञा । सस्थविरोऽपरिच्छन्नः परिच्छदरहितः चग्रहणाच्चशब्दोपादानात् भिक्षुरपि स्वयमपरिच्छन्नः तत्र स्थविरोऽपरिच्छन्नो द्रव्यतः परिवाररहितो द्रष्टव्यः । भावतः पुनर्नियमात् । सपरिच्छदः इतरः शिष्यः पुनर्द्वाभ्यामपि द्रव्यभावाभ्यामपरिच्छन्नो भवति । तत्र भावतोऽपरिच्छन्नो नियमादयोग्य एव । इतरस्तु द्रव्यतोऽपरिच्छदो भावतः सपरिच्छदो योग्यः । अथाचार्ये द्रव्यतोऽपरिच्छदे किं सर्वथा भिक्षोर्गणं धारयितु न कल्पते उतास्ति कश्चित्कल्पनप्रकारः । अस्तीति सूरिस्तथाचाह ॥

नोकारो खलु देसं, पडिसेहयती कयाइ कप्पेज्जा ।
ओसक्कमिउ थेरे, सोचेव परिच्छओ तस्स ॥ १ ॥

एवं सेनोकप्पइ इत्यत्र नोशब्दो देशवचनत्वात् देशं प्रतिषेधयति । तेन कदाचित्कल्पेतापि कदा कल्पते इति चेदत आह । अवसन्ने आचार्ये । इयमत्र भावना । यद्याचार्यो भावतः सूत्राद्युपेतस्तपःसंयमोद्यतस्तस्मिन् द्रव्यतोऽपरिच्छदे न

कल्पतेऽयावत्कथस्तर्हि तस्मिन् द्रव्यतोऽपरिच्छदे वा कल्पते खलु शब्दो विशेषणार्थः । स चैतत् विशिनष्टि । यो भावतः सपरिच्छदस्तस्य कल्पते न शेषस्य परिच्छदे यावत्कथे । आचार्ये गणं धारयति शिष्ये च आचार्यस्य सपरिच्छदः परिवारः स एव तस्य शिष्यस्य भवति व्यवहारस्तस्या भावनात् इतरस्य न किमप्याभवति शिथिलत्वात् । इह परिच्छदविवक्षया चतुर्भङ्गिका । तद्यथा । द्रव्यतोऽपरिच्छन्नो भावतश्चापरिच्छन्नः १ द्रव्यतोऽपरिच्छन्नो भावतः परिच्छन्नः २ द्रव्यतः सपरिच्छदो भावतोऽपरिच्छन्नः ३ द्रव्यतः सपरिच्छदो भावतश्च सपरिच्छदः ४ तत्र चतुर्थभङ्गवर्ती शुद्धः शेषास्त्वशुद्धाः । एष सूत्रार्थः । अधुना निर्युक्तिविस्तरः ॥

निक्खू इच्छा गणं, धारए अपव्वाविए गणो नत्थि ।

इच्छातिगस्स अट्ठा, महातलागेण ओवम्मं ॥

भिक्षोरिच्छा गणं धारयितुं स च गणः स्वयं प्रव्राजितो नास्ति तस्मात्स्वयं साधवः प्रव्राजनीयाः ॥ अथवा यद्यपि स्वयम प्रव्राजने गणो नास्ति तथा यद्यपि यदा अवसन्न आचार्यो भवति तदा योऽसावाचार्यस्य गणः स एव तस्य भवति इच्छा च गणं धारयितुं त्रिकस्य ज्ञानादिरत्नत्रयस्यार्थाय ननु पूजासत्कारनिमित्तमर्थे चौपम्यमुपमा महातडागेन । किमुक्तं भवति पद्मसरसा महातडागेन गणपरिवर्द्धस्योपमा कर्त्तव्या । सा चाग्रे भावयिष्यते । एष निर्युक्तिगाथासंक्षेपार्थः । गणनिक्षेपमतिपाद्य ॥

भावगणेण हिगारो, सो उ अपव्वाविए न संभवति ।

इच्छातिगगहणं पुण, नियमणहेउं तओ कुणइ ॥

भावगणेन नो आगमतो भावगणेनाधिकारः प्रयोजनं स च भावगणो यथोक्तरूपः स्वयं प्रव्राजितो नास्ति । तस्मात्स्वयं साधवः प्रव्राजनीयाः ते परिवारतया कर्त्तव्याः । अथवा प्रमादयत्याचार्ये यः परिवारः तथा स को निर्युक्तिकारो द्वारगाथायामिच्छात्रिकग्रहणं नियमहेतु करोतीत्युक्तं । तत्र किं नियमयति सूरिराह । निर्जरानिमित्तमेवं गणं धारयति ननु पूजादिनिमित्तं । स च गणं धारयन् यतिप्रभुर्महातडागेन समानो भवति । महातडागेन समानतामेव भावयति ॥

तिमिमगरेहिं न खुब्भइ, जइं ब्भुनाहो वियंजमाणेहिं ।

सोय महातलागो पप्फुल्लपउमं च जं अन्नं ॥

यथाऽम्बुनाथस्तिमिमकरैर्विजृम्भमाणैर्न क्षुभ्यति न स्वस्थानाच्चलति । स एव चाम्बुनाथ इह महातडागस्तथा विचक्षणात् अथवा समुद्रात् यदन्यत् प्रफुल्लपद्मं महासरस्तत् महातडागम् ॥

उपनयमाह ॥

परवादीहिं न खुब्भइ, संगिण्हंतो गणं च न गिलाइ ।

होंतिय सयाभिगमो, सत्ताण सरोव्व पउमड्ढो ॥

तिमिमकरैरम्बुनाथ इव परवादिभिराक्षिप्यमाणो न क्षुभ्यति न च गणं संगृह्णन् वस्त्रादिचिन्त्येनानुवर्त्तमानो ग्लायति । यथा वा सरः पद्माढ्यं सत्त्वानां सदाभिगमं भवत्येवं सदा सत्त्वानामभिगमस्साधुः प्रभुर्भवति ॥

एयगुणसंपउत्तो, वा विज्जो गणहरोउ गच्छंमि ।

पडिब्बोहादीएहिं य, जइ होइ गुणेहिं संजुत्तो ॥

एतेन समुद्रतुल्यतडागरूपेण पद्माढ्यसरः समानत्वेन गुणेन वा संप्रयुक्तो गच्छे गणधरः स्थाप्यते । सचैतद्गुणसंप्रयुक्तस्तदा भवति यदि प्रतिबोधादिभिर्वक्ष्यमाणगुणैर्युक्तो भवति । प्रतिबोधादयो गुणाः प्रतिबोधकादिदृष्टान्तेभ्यो भावनीया इति । तानेव प्रतिबोधकादीन् दृष्टान्तानुल्लिङ्गयति ॥

पडिब्बोहगदेसियसिरि, घरेय निज्जामगेय बोधव्वे ॥

तत्तोय महागोवो, एमेया पडिवत्तिओ पंच ॥

प्रतिबोधकः सुप्तोत्थापकः देशको मार्गदेशी श्रीगृहिकोऽनाकागारनियुक्तो निर्यामकः समुद्रे प्रवहणनेता । तथा महागोपोऽतीवगोरक्षणकुशलः एवमेता अनन्तरोदिताः पञ्च प्रतिपत्तयोऽधिकृतार्थे आभिरिति प्रतिपत्तय उपमा । तत्र प्रतिबोधकोपमां भावयति ॥

जह आलित्ते गेहे, कोइ पसुत्तं नरं तु बोहेज्जा ।

जरमरणादिजयत्ते, संसारघरंमि तह उजिए ॥

यथा आसमंततो दीप्तगृहे कोऽपि परमबन्धुः प्रसुप्तं नरं प्रबोधयेत्तथा संसारगृहे जरामरणप्रदीप्ते जीवान् अविबुद्धान् भावसुप्तान् प्रबोधयति । स स्थापनीयो गणधरत्वेनेतित्तीर्थकरैरुक्तः प्रतिबोधकदृष्टान्तः । संप्रति देशकादिदृष्टान्तमाह ॥

बोहेइ अपडिबुद्धे, देसिय मग्गं विजोएज्जा ॥

एयगुणविप्पहीणो, अपालिच्छन्ने य न धरेज्जा ॥ १ ॥

( बोहेइ अपडिबुद्धे ) इति पूर्वगाथाव्याख्यायां व्याख्यातानेन देशकादीनपि दृष्टान्तान्योजयेत् । तद्यथा यो ग्रामादीनां पन्थानमृजुकं क्रमेण प्रापयति स देशक इष्यते । एवं ज्ञानादीनामविराधनां कुर्वन् यो गच्छं परिवर्द्धयति स गणधरः स्थापनीयो न शेषः । श्रीगृहकदृष्टान्तभावना । यथा यो रत्नानि सुनिरीक्षितानि करोति स श्रीगृहे नियुज्यते एवं यो ज्ञानादीनामात्मसंयमयोश्चाविराधनया गणं वर्द्धयति स तादृशो गणस्य नेता कर्त्तव्यः ॥ निर्यामकदृष्टान्तभावना । यथा निर्यामकस्तथा कथंचनाऽपि प्रवहणं वाहयति । यथा क्षिप्रमविघ्नेन समुद्रस्य पारमुपगच्छति एष एव च तत्त्वतो निर्यामक उच्यते । शेषो नामधारकः । एवं य आचार्यस्तथा कथंचनापि गच्छं परिवर्द्धयति तथा क्षिप्रमविघ्नेनात्मानं गच्छं च संसारसमुद्रस्य पारं नयति । स तत्त्वतो गणधरः शेषास्तु नाममात्रपरितुष्टः । महागोपदृष्टान्तभावना यो गाः स्वपदेषु विषमेषु वा प्रदेशेष्वटव्यां वा पर्नीर्वारयित्वा च क्रमेण स्वस्थानमानयति । स महागोप उच्यते । एवमाचार्योऽपि यो गणमस्थानेषु प्रत्यन्तदेशादिषु विहारिणं धारयति । पूर्वाभ्यासगृहाणि च प्रमादस्खलिता व्यपनयति स तादृशो गणपरिवर्द्धकः करणीयो न शेषः । अथवा प्रतिबोधको नाम गृहचिंतक उच्यते । यो गृहं चिन्तयन् यो यत्र योग्यस्तं तत्र व्यापारयति । तत्र व्यापार्यमाणं च प्रमादतः स्खलनं निवारयति स गृहचिंतक उच्यते । एवं यः स्थापितो यो यत्र योग्यस्तं तत्र निर्युक्ते । नियुक्तांश्च प्रमादतः स्खलतः शिक्षयति । स स्थापनीयो गणधरपदे नेतर इति । यश्चैतद्गुणविप्रहीणः प्रतिबोधादिगुणविकलो यश्च द्रव्यतो भावतश्चेत्यर्थः । द्वाभ्यां परिच्छदहीनः स गणं धारयेत् । न स गणधरपदे स्थापनीय इति भावः ॥

दोहिं वि अपलिच्छन्ने, एक्केकेणं व अपरिच्छन्नो य ।

अहारणा होंति इमे, निक्खुंमि गणंधरं तंमि ॥

द्रव्यतोऽपरिच्छन्नो भावतश्चापरिच्छन्न इत्यादिचतुर्भङ्गी प्रागे

योपदर्शिता। तत्र भिक्षी गणं धारयति द्वाभ्यामपि द्रव्यतो भावतश्च नेतव्यः। अपरिच्छदे परिच्छदरहिते प्रथमभंग उपात्तः। एकैकेनथा अपरिच्छन्ने द्वितीयभंगवर्तिनि द्रव्यतोऽपरिच्छन्ने तृतीयभंगवर्तिनि वक्ष्यमाणानि उदाहरणानि भवंतितान्येवाह ॥

भिक्खू कुमारविरए, जामणपंती सियालरायाणो ।
वित्तत्थजुध्द असती, दमगजयगदामगाईया ॥

भिक्षौ द्रव्यभावाभ्यामपरिच्छन्ने गणं धारयति कुमारदृष्टांतः। विरयो लघुस्रोतोरूपो आपनवनदवे द्वितीयो दृष्टांतः। तृतीयः पंक्तिदृष्टांतः। चतुर्थः शृगालराजदृष्टांतः। पंचमो वित्रस्तेन सिंहेन सह युद्धस्याभावो दृष्टांतः। एते पंचदृष्टांता अप्रशस्ताः। प्रथमभंगवर्तिनि प्रशस्ताश्चतुर्थभंगे द्वितीये द्रमकदृष्टान्तस्तृतीयभंगवर्तिनि भृतकस्य सतो दामकादिपरिग्रहो दृष्टांतः। अत्रादिशब्दात् मयूरांगचूलिकादिपरिग्रहः ॥
तत्र कुमारदृष्टांतभावनार्थमाह ॥

बुद्धीबलपरहीणो, कुमारपचंतमसरकरणं तु ।
अप्पेणेव बलेणं, गिण्हो वणमासणा रन्ना ॥

एको राजकुमारः बुद्धिबलपरिहीनो हस्त्यादिबलपरिहीनश्चेति भावः। एतेन द्रव्यभावपरिच्छदरहितत्वमस्याख्यातं। स प्रत्यंतदेशे स्थितो डमरं देशविप्लवं करोति। ततो दायादेन राज्ञा तं बुद्धिबलपरिहीनं ज्ञात्वा अल्पेनैव बलेन दंडप्रेषणेन ग्रहापणं तस्य राज्ञा कृतं। ग्रहणानन्तरं च शासना कृता। ग्राहयित्वा स विनाशित इति भावः ॥
अत्रैवोपनयमाह ।

सुत्तत्थअणुववेतो, अगीयपरिवारगयणपचन्तं ।
दरतित्थकउं हावण, सेवगसेहादयभोउ ॥

एवं सूत्रेण अर्थेन चानुपपन्नोऽसपन्नोऽनेन भावतोऽपरिच्छन्नतामवाह। अगीतपरिवारोऽगीतार्थपरिवृतोऽनेन द्रव्यतोऽपरिच्छन्नत्वमुक्तं। स प्रत्यंतं देशं प्रति गमनं विधाय आचार्यत्वं करोति। स च तथा आचार्यत्वं विरचयन् परतीर्थिकैः परिभीय निःपृष्टव्याकरणः क्रियते। तदनंतरं आचकाणां अपभ्राजनं। यथा विरोधिना यूयं न भवद्धीयधर्मः शोभनः। तथा च भवदाचार्यःपृष्टः सन् किमप्युत्तरं ददाति। किंत्वसमंजसं प्रलपतीति। तथा शिष्या अपि तैर्विपरिणम्यंते। एवं च जायते महाननर्थः शासनस्य। तदेवं यत इमे दोषास्तस्माद्द्रव्यपरिच्छदरहितेन भिक्षुणा न गणो धारयितव्यः। गतं कुमारद्वारम् ॥
अधुना वियरयदृष्टांतमाह ॥

वणदवसत्तसमागम, विरए सिंहस्स पुंछखेवणया ।
तं दिस्सं जंबुएणो, विविरयवूढा मिगाईया ॥

वियरयो नाम लघु स्रोतोरूपो जलाशयः। स च षोडशहस्तविस्तारो नद्यां महागर्तायां वा तस्याऽकुचः त्रिहस्तविस्तारस्तस्य प्रदेशो मध्यो वेंटं ॥

अन्नया अडवीए वणदवो जातो सो सव्वतो समंता दहंतो वच्चइ ताहे मिगादयो सत्ता तस्स वणदवस्स भीया परिभावं वेटं पविट्ठा। तत्थावि सो वणदवो महंतो आगच्छइ। तत्थ य सीहो पविट्ठो। आसितोयमिगादी भाया चिंतिंति। वेंटए स वणदवो पविसइत्ति दुव्भियव्वंति। ततो सीहं पायवडिया विन्नवेंति। तुम्हे अम्हं मिगरायाओ नित्थारेहि। सीहेणं भण्णइ। पुंछे मम धाणियं लग्गा। ततो सीहेण प्लुतं कयं। सोलसहत्थे विकंतो सह मिगाईहिं दूरीणं अन्नया पुणो वणदवो जातो। तहेव मिगादयो तत्थ पविट्ठा। ततो एको सियालो सीहेण उत्तारियपुव्वो चिंतेइ। अहं पि सीहो चेव उत्तारेहामित्ति मिगादयो भणंति। मम पुच्छे धणियं लग्गेहते लग्गा तेण सियालेण प्लुतं कयं। वियरए सह मिगाइएहिं पडिओ सव्वे विणट्ठा ॥ तेअन्नाणातीआवतीसु गीयत्थेणं बीयपए जयणानिसेवणा मिए गच्छं नित्थारियं पासित्ता अगीयत्थो चिंतेइ। सव्वोवि एवमायत्ति एवं भणंतो निक्कारणे बितियपदेण गच्छेण समं विहरइ सो तहा विहरंतो नगरगाइजवावियरए अप्पाणं गच्छं च पाडेइ ॥
एष भावार्थः। अधुनाऽक्षरार्थो विक्रियते। वनदवे जाते सत्त्वानां मृगादीनां वियरयपरिवृत्ते वेंटे समागतः। तेषां सिंहस्य पुच्छे लग्नानां सिंहेन सह व्यपरजसा लघुस्रोतोरूपस्य जलाशयस्य क्षेपनं लंघन ततोदृष्ट्वा जंबुकेनाऽप्यन्यदा तत्कर्तुमारब्धं। तेन च तथाकर्तुमशक्नुवता मृगादयः तस्मिन् व्यपरजसि वूढाः क्षिप्ता एष दृष्टांतः ॥
संप्रति दार्ष्टांतिकयोजनामाह ॥

अद्धाणादिसु एवं, दट्ठुं सव्वत्थ एव भमन्तो ।
नववियरियं अगीतो, पाडइअन्नेवि पवडन्तो ॥

अध्वादिष्वापत्स्वेव द्वितीयपदेन यतनानिषेवणतो गच्छं निस्तारयंतं दृष्ट्वा अगीतोऽगीतार्थःसर्वत्रैव मारयितव्यमिति मन्यमानोनिष्कारणयतनया द्वितीयपदेन गच्छं परिपालयन् भाववियरयमिति द्वितीया प्राकृतत्वात् सप्तम्यर्थे। नरकादिभवरूपे व्यपरजसि प्रपतन् अन्यानपि स्वगच्छवासिनः पातयति। गतं व्यपरजोद्वारम् ॥
अधुना पंक्तिद्वारमाह ॥

जम्बुककूवे चन्दे, सीहेणुत्तारणा य पंतिए ।
जंबुक सपन्तिपडणं, एमेव अगीयाणं ॥

एगया जेट्ठामासे सियाला तिसिया अद्धरत्ते कूवतडे ठिया। कूवं पलोयंति। तत्थ ते जोएहाए उदए चंदबिंबं पासंति। चिंतेतिय चंदो कूवे पडितो। तत्थ य सीहो आगतोचेट्ठइततो तेहिं सियालेहिं सीहो विण्णवितो तुमं मिगाहिवतीए सवि महाहिवती कूवे पडितो एयस्स गुणेणं अम्हे दिवसजूयाए रत्तीए सुहं निरुवसग्गा वियरामो ततो जुज्जसि तुमं गहाहिवतिमुत्तारिउ। सीहो जाणति। पंतिए समं पुच्छे लग्गित्ता वियरह अंतिल्लस्स चंदो लग्गिहिति ताहे सव्वे प्लुतेनोत्तारेहामिति ततोते पंतीए सीहपुच्छे लग्गा कूवमज्झे उत्तिण्णा सीहेण प्लुतं काउं सव्वे उत्तारिया। उवरि गगणे चंदं पासेंति। कूव-

तलेय आलोलिए उदएचंदं अपासमाणा उत्तरियत्ति म ण्णंति । अन्नया तहेव चंदं पासेत्ता सीहेण उत्तारियपुव्वो सियालो एवं चिन्तेइ । अहमवि सीहोइव उत्तारेमि ॥ एवं चिंतित्ता सोसियालो जणइ । पत्तीए मम पुच्छे ल- ग्गित्ता उयरहते उत्तिण्णा । सीयालेणं उत्तारेहामित्ति पुच्छं तं कयं । ततो असमत्थोत्ति तह पुच्छे लग्गित्ता सह कूवे पमिता । तत्थेव मतो एवमहागादीसु आवईसु गीयत्थेणं वितियपदे जयणा निसेवणाए ॥

इत्यादि । उपनयः पूर्ववेदव भाषार्योऽधुना अक्षरार्थः । एकदा जंबुकाः कूपतटे मिलितास्तैः कूपे कूपमध्ये चंडो दृष्टः । तस्मिन् दृष्टे तदुद्धरणाय सिंहपुच्छविलग्नानां पंकधा प्रविष्टानां शृगालानां सिंहेनोत्तारणा कृता । तत् दृष्ट्वा अन्यदा एकेन जंबुकेन सिंहोत्तारितपूर्वेण तथा कर्तुमारब्धं । ततस्तस्य जंबुकस्य सपंक्तिकस्य कूपे पतनमेवमनेनैव दृष्टांतद्वयेकेन प्रकारेण गीतागीतयोर्भवकूपे गच्छेन सह पतनं तत उत्तारणं च गच्छस्य परिभावनीयमिति । गतं पंक्तिद्वारमिदानीं शृगालराजद्वारमाह ॥

नीलारागे खसदुम, हत्थीसरजा सियालकच्छुज्जओ ॥
बहुपरिवारअगीते, विव्वयणो हावणपरेहिं ॥

एको सियालो रत्तिघरं पविट्ठो घरमाणुसेण वेतितो निच्छु जिउमाढत्तो सो पुण गाईहि पारद्धो नीलीरागरंजणे पमितो किहवि ततो उत्तिण्णो नीलवण्णो जातो तं अन्ने सरजतरक्खु सियालादी पासिउं जणंति । को तुमं एरिसो सो जणइ अहं सव्वाहिं मृगजातीहिं खसदुमो नाम मिगराया क ओ । ततो अहं एत्यमागतो पासामि ! ताव कोमवाति ते जाणंति । अपुव्वो एतस्स एसदेवेहिं अणुग्गहितो ततो ज णंति अम्हे तव किंकरा ।

संदिसह किं करेमा खसदुमो जणइ हत्थिवाहणं देह दिण्णो विलग्गो वियरति । अन्नया सियालेण उव्वुइयं । ताहे खसदुमेणं तं सियालसहावमसहमाणेण उव्वुइयं ततो हत्थिणा सियालोत्ति, नाउं सोंडाए घेत्तुं मारितो ॥ एवं कोइ अगीयत्थो अगयित्थपारिवारं लजेत्ता पव्वंत देसं तं गंतुं आयरिउत्ति पकासेइ । सो कहिंवि विओसेहिंपे यालितो जानह्रिकिंविजाणइ एवं तेण अप्पा जढामितो ॥

एष गाथार्थोऽधुना अक्षरार्थः । नील्यासंबंधी रागो यस्य स नीलीरागः । शृगालःखसदुमोनाममृगराजो जातः । तस्यहस्तिनः सरजाः शृगाला उपलक्षणमेतत् । तरक्षादयश्च परिवारः । सोऽन्यदा कस्यापि शृगालस्योच्छब्दमाकर्ण्य शृगालोबादितमकरोत् । ततःशृगालोऽयमिति ज्ञात्वा हस्तिना मारित इति शेषः । एवं गीतार्थबहुपरिवारे अगीते अगीतार्थे विहरति बहुश्रुतोऽहमाचार्य इति बहुजनविश्रुतं विकुर्वाणः प्रष्टव्याकरणासमर्थतया परेभ्यः पकर्षति त्यक्षापभ्राजना भवति । अथवा अयमन्य उपनयः ॥

सेहादिकज्जेसुं वा, कुलादिसमितिसु जंपउ अयं तु ।
गीएहिं विसुयंतो, निहोडणमपच्चओ सेहि ।

वाशब्द उपनयांतरसूचकः । शैक्षकादिकार्येषु कुलादिसमवाये नियुक्तः कुलग । संघसमवायेषु श्रावकाः सिद्धपुत्राश्च श्रवत अयमेव तेरवकारार्थः । बहुश्रुतो जल्पतु व्यवहारनिर्णयं करोतु ययाकस्य भवतीति । ततस्तेनाव्यवहारमुक्तं तच्च गीतार्थैर्विश्रुन ततस्तै निहोडण मिति निहेनितं यथा अगीतार्थ एव न जानाति व्यवहारमिति । ततः शैक्षे प्राकृतत्वात् षष्ठ्यर्थे सप्तमी । एकवचने बहुवचनं । शैक्षकाणामुपलक्षणमेतत् श्रावकाणां सिद्धपुत्राणां च तद्वचस्यप्रत्ययो जातः चिंतयति च एष इय त्कालमस्माभिर्गीतार्थः संज्ञाचित इति । गतं शृगालराजद्वारम् ॥

संप्रति ( विसत्थजुद्धमसातिसि ) द्वारं व्याचिख्यासुराह ॥

एक्केकएगजाती, पतिदिण सममेव गिएहाइ ॥
सीहेण हु जुज्जइत्ति, पारुइ कूवम्मि वुड्ढससगेण ॥ १ ॥
एमेव जंबुगो, वा कूवे पमिबिंबमप्पणो दिस्स ।
उवणय तत्थ मरणं सामायारीगयिअगीयाणं ॥ २ ॥

एगो सीहो सो हरिणजातीणं लुद्धो दिवसे २ हरिणं मारेऊण खाइ । तओ हरिणेहिं विण्णविओ किमंगरायं तुमं हरिणजातीणं एक्कयाए परिनिव्विट्ठो ता पसायं करेहि । सव्वामिगजातीणं वारएणं पइदिवसमेक्केक्कं मिगं खाहि । सीहेणं चिंतियं जुत्तमेस जणइ ततो सव्वे मिगा मेलित्ता सीहेण जणिया । तुब्भे कुलजुत्तत्ताए आत्मीयकुलौचित्येनेत्यर्थः । सव्वामिगजातीणं वारएणं पइदिवसं सट्ठाणट्ठियस्स एगं पेसिज्जाह । तेहिं अब्भुवगयं । ततो ते वि मिगा तहेव पेसंति । अन्नया ससगजातीए वारए । ससगा संपसारेंति मन्त्रयंतीत्यर्थः । कोवच्चउ- अज्ज सीहसगासे एगो वुड्ढससगो जणइ । अहं वच्चामि । जो सव्वेसिं मिगाणं संति काउं एमित्ति सो वालिओ अंतराले मरुयकूवसरिसे कूवं दट्ठु उस्सूरे सीहसगासमागतो । ताहे सीहेण जणियं किं रे तुमं उस्सूरे आगतोसि । ससगो जणइ । अहं पाए आगच्छंतो मंतो अन्नेण सीहेण रुद्धो । जहा कहिं वच्चसि । ततो मए सव्वातो कहितो । ताहे सोजणइ अन्नो न होइसो मिगराया ततो मए जणियं । जइ अहं तस्स मिगरायस्स सगासं न जामि तो सो रुट्ठो सव्वे ससगा उच्छादेहिति । तम्हा जामि तस्स सगासं कहेमि । ततो जो तुमं बलितोहोहिति तस्स अम्हे आणं कहामो । ताहे अहं तेण जणितो वच्चा कहोहि जण आगच्छ मम सगासं जदि ते सत्ती अत्थि ततो सीहे जणति दंसेहि ममं तं सीहं । ततो ससओ सीहेण समागम्म दूरं अगरूं दूरत्थोववदंसेति । जणइ य एत्थ पविट्ठो चिट्ठइ । जइ तपसियसि तो तुमं अगज्झयज्ञेण

या खावगा समंति पाविट्ठा बक्षमोक्षे कहा लोगविरुद्ध-कहा तइ य परवयमा लोयणीसुयपच्छित्ता तहया जायाईमयसंकिया । सुसगारज्जीरुया चेव गारवत्ति-पद्धसिया तहा । एवमादि अणेगजवादोसवसएहिं पूरि-यानिरंतरा अणंतेणं कालसमएणं गोयमा ! अड्ढकेणं अणंताउ समणीओ बहुरवावसदंगया गोयमा ! अणं ताउ चिट्ठंति आअणादी सल्लनल्लीया । जावदोसे कस-लेहिं जुजमाणीओ कडुविरसं घोर गतरं फलं चिट्ठइस्सं-ति अज्जावि तेहिं सल्लेहिं सल्लिया अणंतं पि अणागयं कालं तम्हा सल्लं सुसुहुमंपि समणी णो धारेज्ज खणं तिबेमि

( १३ ) आलोचनायां दत्तायां न विरतिभंगः स-ष्टान्तः ॥

आलोचनायां दत्तायामपि विरतिभंगो न कश्चीदेः । महानिशीथे । अ. ७ ॥

पाणाइवाय विरइ, सेवफलया गिएहिऊण ताधीमं मरणावयं मिपत्ते मरेज्जाविरइं न खंडिज्जा ? अलियव-यणस्स विरइ, सावज्जं सच्चमवि न जालिज्जा परदव्वह-रण विरई, करेज्ज दिक्खे वि माल्लोयं २ घरणं वुच्चरवं जव्वयस्सकाउं परिग्गहचायं ॥ राइभोयणविरइ, पं-चिंदियनिग्गहं विहिणा ३ अणे य कोह माणा, एग दोसे य आलोयणं दाउं । पमाडारअहंकारं, गायढे सव्वं पव्वतणे । जह तव संजमसज्जा यम, गाणमाइसु-सुद्धि जावेहिं उज्जमियव्वं गोयम ! विज्जुलयाचंच ले जीवे किं बहुणा गोयमा ! इत्थं दाऊणं पुढविकायं विराहिज्जा कत्थगंतुं समुज्जिहई । किं बहुणा गोयमा ! इत्थं दाऊणं आलोयणं वाहिणपाणि तहिं जम्मं जो पिए-कत्थ । च्छुमुज्जिही किं बहुणा गोयमा ! एत्थं दाउणं आलोयणं उन्हवयइ जालय जाइ फुसिज्जत्ता कत्थसुज्झिहि । किं बहुणा गोयमा ! इत्थं दाऊण आलोयणं वाउकायं उदिरिज्जा कत्थगंतु समुज्झिहि किं बहुणा णं गोय-मा! एत्थम्दाउणम् आलोयण जोहरियतणं कप्पांवाफरिसे कत्थमसुज्झिहि किं बहुणा गोयमा ! इत्थं दाऊणं आलोयणं अक्कमइ बीजकायं जो कत्थगंता समुज्झिही किं बहुणा गोयमा ! इत्थं दाउणं आलोयं वियलं दीविति चउपंचि-दियपरितावं जो कत्थ समुन्यही किं बहुणा गोयमा इत्थं दाउणं आलोयणं छकाए जो तं न रक्खेज्जा । सुहुमे कत्थसमुच्चिहि किं बहुणा गोयमा ! इत्थं दाउणं आलोयणं तसथावरो जो न रक्खे कत्थगंतु समुच्चिहि आलोइयनिंदियगरहियओविकयपायच्छित्तनिस्सल्लो उत्तम ठाणंमि तिउपुढवारंजं परिहरिज्जा । आलोइयनिंदियगर-हियविकयपायच्छित्तनीसल्लो उत्तमठाणंमि ठिओ-जोइ ए मा फुसावेज्जा । आलोइयनिंदियगरहिओविकयपायच्छित्तसंविग्गो उत्तमठाणमि ठिओमाविराहिज्जा अत्ताणं आलोइयनिंदियगराहिज्जविकयपायच्छित्तसंविग्गोच्छिन्नं पि तणं हरियं असइमणगं मा फरिसे आलोइयनिंदियगरहियो विकयपायच्छित्तसंविग्गो उत्तमठाणंमि ठिउ जाव-ज्जीवं एतेसिं बेइंदियतेंदियचउरो पंचिंदियाणं जीवाणं संघट्टणपरियावण किलावणोद्दवणमाकासी आलोइयनिंदियगरहिओविकयपायच्छित्तसंविग्गो उत्तमठाणंमि ठिओ सावज्जं मा नाणिज्ज आलोइयनिंदियगरहिओ विकयपायच्छित्तसंविग्गो लोयतेण विजई गहियागहिओ रिविव उदिन्ना आलोइयनिंदियगरहिओ विकयपायच्छित्तनिजो-सल्लोजोइत्थि संलोवेज्जा गोयमा ! कत्थसुज्झिहिआलोइयनिंदियगरहियओविकयपायच्छित्तसंविग्गोचउदसधम्ममुवगरणे उद्दमापरिहरणं कुज्जा तेसुंपि वि ममतो अमुच्छिओ अगड्ढिओ दढ़हविया अहवा कुज्जाउ ममत्तं तासुर्ध्दी गोयमा ! नत्थि किं बहुणा गोयमा ! नत्थइत्थंदाउणं आ-लोयणं ख्याणिए आविए पाणमकत्थगम तु समुज्झिही आलोइयनिंदियगरहिओ विकयपायच्छित्तनीसल्लो छड-क्कमेणरक्खे जो कत्थसुद्धिं लभेज्ज मे । महा. अ. ७ ॥

आलोचनायां दत्तायां विरतिभङ्गो न करणीयस्तथा उप-चारात्तत्कारणत्वात्प्रमादक्रियायाश्च । ध. २ अ. ।

आलोचनायाः प्रायश्चित्तस्य प्रशस्तयोगसङ्ग्रहनिमित्तत्वा-त्तदात्मके प्रथम ग्र.गमङ्ग्रहे, च । " प्रशस्तयोगसङ्ग्रहनिमि-त्तत्वादालोचनादय एव तथोच्यन्ते " सम. ३२ स. । मोक्ष-साधनयोगसङ्ग्रहाय शिष्येणाऽऽचार्याय आलोचना दत्तेति । अत्रोदाहरणम् ।

उज्जेणि अट्टणे खलु, मिंहगिरि सोपारए पुहइ हवइ ।
मच्छिअमल्ले फुरुल्ला, खवदिओ फलिहमल्ले अ ॥ १ ॥

फुरुल्लखलिया ग्रामाः फलहीशब्दो देश्यो वकर्णीवाची ।

उज्जयिन्यामुज्जयिन्यां, समस्तनगरावनीः ।
जितशत्रुनृपस्तत्र, मल्लस्तस्याट्टनाभिधः ॥ १ ॥ इत्यादि.

( अट्टन ) शब्दे तत्कथा ।

यथाट्टनस्तथाचार्यः, पताकानिर्वृत्तिः पुनः ।
साधुर्मल्लोऽपराधास्तु, प्रहारास्तान् गुरोर्हि यः १०
आलोचयति निःशल्यं, स निर्वाणपताकिकां ११
त्रैलोक्यरंगे गृह्णाति, न्युक्ताः शिष्यगुणा इमे ।
आव. क. । आ. चू. । आव. ॥

( १४ ) आलोचनायामकृतायां मृत्वाऽनाराधको भवति ।

जिकखु य अमयरं अकिच्चट्ठाणं पडिसेवित्ता सेणं तस्स ठाणस्स अणालोइयपडिक्कंते कालं करेइ । णत्थि तस्स

आराहणा । सेणं तस्स ठाणस्स आलोइयपडिक्कंते कालं करेइ । अत्थि तस्स आराहणा । भिक्खू अएणयरं अकिच्चट्ठाणं पडिसेवित्ता तस्स णं एवं भवइ पच्छाविणं अहं चरिमकालसमयंसि एयस्स ठाणस्स आलोइयस्सामि जाव पडिक्कमिस्सामि । सेणं तस्स ठाणस्स अणालोइयपडिक्कंते जाव णत्थि तस्स आराहणा । सेणं तस्स ठाणस्स आलोइयपडिक्कंते कालं करेइ । अत्थि तस्स आराहणा भिक्खूय अएणतरं अकिच्चठाणं पडिसेवित्ता तस्स णं एवं भवइ जइ ताव समणोवासयावि कालमासे कालं किच्चा अएणयरेसु देवलोएसु देवत्ताए उववत्तारो भवंति । किमंग पुण अणवणियदेवत्तणं पि णो लभिस्सामिति कट्टु सेणं तस्स ठाणस्स अणालोइयपडिक्कंते कालं करेइ नत्थि तस्स आराहणा । सेणं तस्स ठाणस्स आलोइयपडिक्कंते कालं करेइ अत्थि तस्स आराहणा सेवं भंते ! भंतेत्ति ॥ भ. १० श. २ उ. ।

टीका । इह च शब्दश्चेदित्येतस्यार्थे वर्तते । स च भिक्षोरकृत्यस्थानासेवनस्य प्रायेणासंभवप्रदर्शनपरः ( पडिसेवित्ति ) अकृत्यस्थानं प्रतिसेविता भवतीति गम्यं । वाचनान्तरे त्वस्य स्थाने ( पडिसेविज्जत्ति ) दृश्यते । सेणमिति । स भिक्षुः तस्य ठाणस्सेति तत्स्थानम् अणपन्नियदेवत्तणं पि नो लभिस्सामिति अणपन्निका व्यन्तरनिकायविशेषास्तत्संबन्धिदेवत्वमणपन्निकदेवत्वं तदपि नो लप्स्ये इति भ. ॥ टी. ।

( २५ ) आलोचनाफलम् ॥

आलोयणाएणं भंते ! जीवे किं जणयइ आलोयणाएणं मायाणिया । मिच्छादंसिणसल्लाणं मोक्खमग्गविग्घाणं अणंतसंसारबंधणाणं उद्धरणं करेइ । उज्जुभावं च जणयइ । उज्जुभावपडिवएणे वियणं जीवे अमाई इत्थिवेयं नपुंसगवेयं च न बंधइ पुव्वबद्धं च णं निज्जरेइ ॥ ५ उत्त० अ० २७ ॥

गुरुपुरतः कुतोऽप्यतीचारसंभवे आलोचना तया मायाशल्यं निदानं मम अनेनतपसा इत्यादेरिदं स्यादिति प्रार्थनात्मकं मिथ्यादर्शनं सांशयिकादेतानि शल्यानीव शल्यानि तेषां ततः कर्मधारये मायानिदानमिथ्यादर्शनशल्यानि तथाहि तोमरादिशल्यानि तत्कालदुःखदानेऽप्यायते दुःखदायीनि एवं मायादीन्यपीत्येवमुच्यते तेषां मोक्षविघ्नानां पापानुबंधकत्वेन मुक्त्यन्तरायाणां तथानंतं संसारं वर्द्धयंति वृद्धिं नयंतीत्यनंतसंसारवर्द्धनानि तेषामुद्धरणमपनयनं करोति तदुद्धरणतश्च ऋजुभावं चार्जवं जनयति ॥ ( उज्जुभावपडिवएणेयत्ति ) प्रतिपन्नऋजुभावश्च जीवोऽमायी मायारहितस्ततः पुंस्त्वनिबंधनत्वान्मायित्वस्य ( इत्थिवेयत्ति ) प्राग्वत्स्त्रीवेदं नपुंसकवेदं च न बध्नाति पूर्वबद्धं च तदिह द्वयं यद्वा सकलमपि कर्म्म निर्जरयति क्षपयति तथा च मुक्तिपदमाप्नोतीत्यभिप्रायः । उक्तंहि । " उद्धियदंसो साहू अचिरेण उवेति सासयं ठाणं । सोच्चिय पुद्वियदंसो संसारपवड्डओ होत्ति ॥२८॥" उत्त० टी० ॥

आलोचनापरिणतस्य म्रियमाणस्यापि आराधकत्वमाराधनाशब्दे ॥

तिहिं ठाणेहिं मायी मायं कट्टु णो आलोएज्जा णोपडिक्कमेज्जा णो णिंदेज्जा णो गरहेज्जा णो विउट्टेज्जा णो विसोहेज्जा णो अकरणयाए अब्भुट्ठेज्जा णो अहारिहं पायच्छित्तं तवोकम्मं पडिवज्जिज्जा । तं० । अकरिं सुवाहं करेमि वाहं करिस्सामि वाहं । तिहिं ठाणेहिं मायी मायं कट्टु णो आलोएज्जा णो पडिक्कमेज्जा जाव नो पडिवज्जेज्जा । तं जहा । अकित्ती वा मे सिया अवन्ने वा मे सिया अविणये वा मे सिया तिहिं ठाणेहिं मायी मायं कट्टु णो आलोएज्जा जाव णो पडिवज्जेज्जा तं० किच्चिवा मे परिहाइस्सइ जसोवा मे परिहाइस्सइ पूयसक्कारे वा मे परिहाइस्सइ । तिहिं ठाणेहिं मायी मायं कट्टु आलोएज्जा पडिक्कमेज्जा निंदेज्जा जाव पडिवज्जेज्जा । तं० । मायी स्सणं अस्सिं लोगे गरहिए भवइ उववाए गरहिए भवइ आयाई गरहिया भवइ । तिहिं ठाणेहिं मायी मायं कट्टु आलोएज्जा जाव पडिवज्जेज्जा तं अमाइस्सणं अस्सि लोगे पसत्थे भवइ उववाए पसत्थे भवइ आयाई पसत्थे भवइ । तिहिं ठाणेहिं मायी मायं कट्टु आलोएज्जा जाव पडिवज्जेज्जा तं० । णाणट्ठयाए दंसणट्ठयाए चरितट्ठयाए स्था. ठा. ३. ॥

तिहिं ठाणेहिमित्यादि व्याख्या । मायी मायावान् मायं । मायाविषयं गोपनीयं प्रच्छन्नमकार्यं कृत्वा नो आलोचयेत् मायामवेति शेषं सुगमं नवरमालोचनं गुरुनिवेदनं प्रतिक्रमणं मिथ्यादुष्कृतदानं निन्दाऽऽत्मसाक्षिका गर्हा गुरुसाक्षिका व्रोटनं तदध्यवसायनिच्छेदनं । आत्मनश्चारित्रस्य वाऽतिचारमलक्षालनमकरणतया ऽभ्युत्थानं पुनर्नैतत्करिष्यामीत्यभ्युपगमः । अहारिहं । यथोचितं पायच्छित्तंति पापच्छेदकं प्रायश्चित्तंविशोधकं वा तपः कर्म निर्विकृतिकादि प्रतिपद्येत तद्यथा अकार्षमहमिदमतः कथं निन्द्यामित्यालोचयिष्यामि स्वस्य महात्म्यहानिप्राप्तेरित्येवमभिमानात् । तथा करोमि चाहमिदानीमेव कथं साध्विति भणामि करिष्यामीति चाहमेतदकृत्यमनागत कालेऽपीति कथं प्रायश्चित्तं प्रतिपद्यत इति कीर्तिः कादिग्गामिनी प्रसिद्धिः । सर्वदिग्गामिनी सैव वर्णो यशः । पर्यायत्वादस्य अथवा " दानपुण्यफला कीर्तिः पराक्रमकृतं यशः " तद्वर्णयति तयोः प्रतिषेधोऽकीर्तिरवर्णश्चेति । अविनयः साधुकृतो स्यादिति । इदं च सूत्रमप्राप्तप्रसिद्धिपुरुषापेक्षं मायं कट्टुति मायां कृत्वा मायां पुरस्कृत्य मायेयत्यर्थः । परिहास्यति हीना भविष्यति पूजा पुष्पादिभिः । सत्कारो वस्त्रादिभिरिदमेव विवक्षितमकरूपत्वादिति । इदं तु प्राप्तप्रसिद्धिपुरुषापेक्षं शेषं सुगमं । उक्तविपर्ययमाह ।

( तिहि ) मित्यादि सूत्रत्रयं स्फुटं किन्तु मायी ( मायंकट्टु आलोएज्जति ) इह मायी अकृत्यकरणकाल एव आलोचनादिका लेत्यमायेवालोचनाद्यन्यथानुपपत्तिरिति ( अस्सिंलोति ) अयं यतो मायिन इह लोकादा गर्हिता भवन्ति । यतश्चामायिन इहलोकाद्याः प्रशस्ता भवंति यतश्चामायिनः आलोचनादिना निरतीचारीभूतस्य ज्ञानादीनि स्वस्वभावं लभन्ते । अताऽहम

भावी कृत्वा आलोचनादि करोमीति भावः ॥

**आलोयणाणय-आलोचनानय**-पुं० आभिमुख्येन गुरोरात्मदोषप्रकाशनमालोचना स एव नयः । आलोचनायाः नयभेदे, तद्वक्तव्यता ( सामाइय ) शब्दे विशे० आ. चू. १ अ. ।

**आलोयणारिह-आलोचनार्ह**-न. आ मर्यादया " जह बालो जंपंतो, कज्जमकज्जं च उज्जुओ भणइ । तं तह आलोइज्जा, मायामयविप्पमुक्कोय " इत्येवंरूपयाऽऽलोचनं गुरोः पुरतः प्रकाशनं तावन्मात्रेणैव यस्य पापस्य शुद्धिस्तदालोचनार्हं तद्विशोधिकं प्रायश्चित्तमप्युपचारादालोचनार्हम् । जीत. व्य. उ. १ आलोचनां गुरुनिवेदनां विशुद्धये यदर्हत्यतिचारजातं तदाऽऽलोचनार्हं तद्विशोधकमालोचनालक्षणं प्रायश्चित्तमप्युपचारादालोचनार्हम् ग. अ. १।२ औप. प्रायश्चित्तभेदे । आलोचनार्हं यद्गुरुनिवेदनया शुद्ध्यतीति ग, ३ ठा. भग. श. २५ उ. ७ आलोचना गुरुनिवेदनम् । तथैव यच्छुद्ध्यत्यतिचारजातं तत्र तदर्हत्वादालोचनार्हम् । तच्छुद्ध्यर्थं यत्प्रायश्चित्तं तदप्यालोचनार्हं तच्चालोचनैव स्था० ठा० १० ।६॥

एतस्याशेषवक्तव्यताऽऽलोचनाशब्दे आलोचनायोग्ये आचार्यादिके. पु. त चालोचनाशब्दे व्य० उ. १० ध. अधि.२ नि. चू. उ. २० ॥

**आलोयणायरिय-आलोचनाचार्य**-पुं० विकटनागुरौ ( जोगो आलोयणायरिओ ) आलोचनाचार्यो विकटनागुरुस्स च कीदृशो योग्य इत्यालोचनाशब्दे । पञ्चा० १५ वृ. ध. अधि. २ ॥

**आलोयणाविहिसुत्त-आलोचनाविधिसूत्र**-न० शिष्यनिवेदितप्रायश्चित्तपर्यालोचनविषयप्रायश्चित्ताभिधायिनि सूत्रे आलोचनाविधिमुक्ता नाम गुरुं शिष्येण गुरोर्निवेदिते गुरुणा प्रायश्चित्तपर्यालोचनविषयाणि प्रायश्चित्ताभिधायिनि नि० चू. उ. २ ॥

**आलोयदरिसणिज्ज-आलोकदर्शनीय**-त्रि० आलोकं दृष्टिगोचरं यावद् दृश्यतेऽत्युच्चत्वेन यः स आलोकदर्शनीयः ज.श.९.उ.३३ आलोके दृष्टिविषये क्षेत्रे स्थितोऽत्युच्चतया दृश्यते यः स आलोकदर्शनीयः अत्युच्चतया यावदृष्टिगोचरं दृश्यमाने ज्ञा० अ०१ ( दंसणरइयआलोयदरिसणिज्जा ) आलोकं दृष्टिपथं यावद्दृश्यते अत्युच्चैस्त्वेन या सा आलोकदर्शनीयेति औप० नात्युच्चतया आलोकमात्र एव दर्शनीये मङ्गल्यत्वात् प्रस्थानसमये द्रष्टुं योग्ये, च ॥

दरिसणरइय आलोयदरिसणिज्जा ॥

आलोके बहिः प्रस्थानसमयनार्यिति दर्शनीया द्रष्टुं योग्या मंगल्यत्वात् अन्ये त्वा दूरालोके दर्शनीया न पुनरत्युच्चा आलोकदर्शनीयेति राज० ॥

**आलोल-आलोल**-त्रि० ईषत् लोलः प्रा० स० ईषच्चञ्चले, । "आलोलपुष्करमुखोल्लसितैरभीक्ष्णम मघः"वाच. ॥

**आलोलिय-आलोलित**-त्रि० आ लुल णिच् क्त ईषच्चञ्चलीकृते ॥

**आवंत-आवन्त**-पुं० अवन्तेरयं राजा अण् अवन्तिदेशाधिपे चन्द्रवंश्ये नृपभेदे, वाच० ॥

**आवन्तिअज्झयण-आवन्त्यध्ययन**-न० आचाराङ्गस्य नवब्रह्मचर्याध्ययनान्तर्गते लोकसाराख्ये पञ्चमेऽध्ययने । आवंतीत्याचारस्य पञ्चमाध्ययनम् तत्र ह्यादावयाधर्तीत्यालापको विद्यत इत्यादानपदेनैतन्नाम । अनु० । आवतीति आद्यपदेन नामान्तरं न तु लोकसार इति स्था० ठा. ९ । सम० । आव० ( आयाण पयणावंती गोणनामेण लोगसारोत्ति ) आदीयते प्रथममेव गृह्यते इत्यादानम् तच्च तत्पदं चादानपदम् तेन करणभूतेनावंतीत्येतन्नामाध्ययनादावावंतीशब्दस्योच्चारणात् आचा० अ. ५ उ. १ ॥

**आव-( जाव ) यावत्**-त्रि० आदेर्योजः ॥४५॥ इति प्राकृतसूत्रेण पदादेर्यस्य जो वा भवति आर्षे लोपोऽपि । प्रा० । यत्परिमाणमस्य मतुप् । यत्परिमाणे स्त्रियां ङीप् यावति साकल्ये अवधौ, व्याप्तौ, माने, अवधारणे च । अव्य० अमरः । एतच्छब्दयोगे द्वितीया । वाच० ॥

**आवकह-यावत्कथ**-अव्य० यावज्जीवमित्यर्थे, । आवकहं उग्गयं समित्तासि ॥ १६ ॥ यावत्कथमिति यावज्जीवम् आचा० अ. ९ उ.४ ॥

**आवकहा-यावत्कथा**-स्त्री० यावती यत्परिमाणा कथा मनुष्योऽयं देवदत्तादिर्वाऽयमिति व्यपदेशलक्षणा यावत्कथा यावज्जीवे जत्थवियणं आवकहाए चिट्ठइ स्था० ठा. ४ स पारए आवकहाए यावत्कथं यावज्जीवमित्यर्थः । आचा० अ. ९. उ. ४ जे आवकहा समाहिए कियंतं कालं यावत् कथा देवदत्तो यज्ञदत्त इति कथा यावदिति सूत्र० श्रु. १ अ. २ भगा आवकहाए गुरुकुलवासं ण मुंचंति ॥१६॥ यावत्कथं यावज्जीवम् । पंचा १० वृ. ११ ॥

**आवकहिय-यावत्कथिक**-त्रि० यावज्जीविके । पंचा० वृ. ११

एत्थ उसावय धम्म,पायमणुव्वयगुणव्वयाइ च । आवकहियाइं सिक्खा, वयाइं पुण इत्तरां— ॥

इति पंचा० १ वृ. । यावत्कथिकानि यावती यत्परिमाणा कथा मनुष्योऽयमित्यादिव्यपदेशरूपा यावत्कथा तस्यां भवानि यावत्कथिकानि यावज्जीवानीत्यर्थः । पंचा.॥

यावत्कथिकानीति सकृद्गृहीतानि यावज्जीवमपि भावनीयानीति । आव. । सामायिकभेदे-तच्च मध्यमवैदेहकतीर्थकरतीर्थान्तर्गतसाधूनामवसेयम् । तेषामुपस्थापनाया अभावात् । पंचा वृ. ११ । आत्मनः कथां यावद्यदास्ते तद्यावत्कथं यावज्जीवमित्यर्थः । यावत्कथमेव यावत्कथिकम् । सामायिकचारित्रगुणप्रमाणभेदे, । एतच्च भरतैरावतप्राद्यचरमवर्जमध्यमतीर्थकरसाधूनां महाविदेहयतीनां च संभवति । अनु. । यावत्कथस्य भाविव्यपदेशान्तराभावात् यावज्जीविकस्य सामायिकस्याऽस्तित्वात् यावत्कथिकः । सामायिक संयतभेदे, । स च मध्यमजिनमहाविदेहजिनसम्बन्धिसाधुः । भ० श.२५ उ. ७ । प्रतिक्रमणभेदे, च स्था ठा. ॥ यावत्कायकं यावज्जीविकं महाव्रतभक्तपरिहानादिरूपं प्रतिक्रमणत्वं चाऽस्य निवृत्तिलक्षणाऽन्वर्थयोगादिति । आव० ॥

पंच य महव्वयाइं, राइं चउट्ठाइं चाउजा मोक्खं ।
भत्तपरिन्ना य तहा, दुन्हंपि अ आवकहिआइं ॥

पंच महाव्रतानि प्राणातिपातादिनिवृत्तिलक्षणानि राइभोयणछट्ठाइंति । उपलक्षणत्वात् रात्रिभोजननिवृत्तिषष्ठानि पुरिमपश्चिमतीर्थंकरयोस्तीर्थे इति । चतुर्यामश्च निवृत्तिधर्म एव भक्तपरिज्ञा च तथा चशब्दादिङ्गितमरणादिपरिग्रहः द्वयोरपि पुरिमपश्चिमयोः चशब्दान्मध्यमानां च यावत्कथिकान्येतानीति गाथार्थः ॥

अशनभेदे, च-भ० श. २५ उ. ७ ॥

सेकिंतं आवकहिए आव २ दुविहे प० तं पा
ओवगमणे य भत्तपच्चक्खाणे य ॥ प्रव० द्वा. ६ दश० . अ १ ।

आवग–आवक–त्रि० अवति, अव ण्वुल्—रक्षके, वाच०

आवज्ज–आतोद्य न० ( श्रोतोऽद्याऽन्योऽन्यप्रकोष्ठातोद्यशिरोवेद नामनोहरसरोरुहे क्तो श्च वः ॥ १ । ५६ इति प्राकृतसूत्रेणैष्वोतोऽत्वं वा भवति तत्सन्नियोगे च यथा संभवं ककारतकारयोर्वादेशः । प्रा० । वीणादौ वाद्ये, अन्यत्र बहुलत्वाद् ( आवज्ज ) शब्दे ।

आवज्जण–आवर्जन–न० उपयोगे व्यापारे, च केवलिसमुद्घातगन्तुमनसा केवलिना कर्तव्यमावर्जीकरणमधिकृत्य ( आवज्जणमुव प्रोगो वावारो वा तदत्थमाइए ) तदर्थं समुद्घातकरणार्थमादौ केवलिन उपयोगो मया अधुनेदं कर्तव्यमित्येवंरूप उदयावलिकायां कर्मप्रक्षेपरूपो व्यापारो वाऽऽवर्जनमुच्यते । इति विशे० । अभिमुखीकरणे, आ० चू० ॥

आवज्जिय–आवर्जित–त्रि–वृज–णिच्–क्त० अभिमुखे,आ. चू०

आवज्जियकरण–आवर्जितकरण–न० अभिमुखीकरणे, । केवलिसमुद्घातात्पूर्वं कर्तव्ये केवलिनोव्यापारविशेषे च आ. चू० केचिदावर्जितकरणमिति वर्णयन्ति ।

तेषामप्यावर्जनशब्दस्याऽभिमुखपर्यायवाचित्वात् आवर्जितकरणसिद्धिः कथमावर्जितमुच्यते यथा लोके दृष्टान्तदावर्जितो मनुष्याभिमुखीकृत इति तथा च सिद्धान्तः । मिद्धपर्यायपरिणामाभिमुखीकरणं यत्तदावर्जितकरणं येन कारणेन परिणत आत्मा नियमात् सिद्धत्वपर्यायपरिणामाभिमुखो भवतीत्यर्थः ॥

आवज्जीकरण–आवर्जीकरण–न० समुद्घातकरणार्थमादौ केवलिन उपयोगो मया अधुनेदं कर्तव्यमित्येव उदयावलिकायां कर्मप्रक्षेपरूपो व्यापारो वा आवर्जनमुच्यते । तथा भूतस्य करणमावर्जीकरणम केवलिसमुद्घातात्पूर्वं केवलिना कर्तव्ये व्यापारभेदे, विशे. ।

आव ( ट्ट ) ( त्त ) ( त्त ) त–आवर्त पुं० आवर्तनमावर्तःसचस मुद्रादेश्चक्रविशेषाणांचेति । स्था० ठा. ४ । ३ । अ. १ । आ. म. प्र. । आवर्तयति प्राणिनं भ्रामयतीत्यावर्तः । सूत्र० श्रु. १ श्र. ३ । आ. वृत. भावादौ घञ् चक्राकारेण जलस्यपरिभ्रमणे । वाच० ॥ त्तस्याधूर्तादौ ॥ २ । ३० ॥ इति प्राकृतसूत्रेण तस्य भवति धूर्तादीन् वर्जयित्वा बाहुलकाधिकारात् धूर्तादावपि प्रा० । जलादीनां परिभ्रमणे आचा० श्र० १ उ. ५ आवर्त आवर्तन परिभ्रमणमिति ज्ञा० श्र० १ मोहावस्त महाजीमं । मोहोमोहनीयं कर्म तदेव तत्र विशिष्टभ्रमिजनकत्वादावर्तो यस्मिन्स तथा विध्वस्तमिति आव । स्था० ठा. ४ ॥

चत्तारि आवत्ता पन्नत्ता । तं. खरावत्ते उन्नयावत्ते गूढावत्ते आमिसावत्ते ठा. । आवर्तन्तेपरिभ्रमंति प्राणिनो यत्र स आवर्तः संसारे आचा० अ. १ । ५ ( आवट्टं सो पसंगमभिजाणति ) आचा० अ. ३३ । १ । आवट्ट इत्यादि भावावर्तो जन्मजरामरणरोगशोकव्यसनोपनिपातात्मः संसार इत्युक्तं हि "रागद्वेषवशाविद्धं, मिथ्यादर्शनदुस्तरं ॥ जन्मावर्ते जगत् क्षिप्तं, प्रमादाद्भ्राम्यते भृशं ॥ १ ॥ भावश्रोतोऽपि शब्दादिकामगुणविषयाभिलाष आवर्तश्च श्रोतश्च आवर्तश्रोतसी तयोरागद्वेषाभ्यां सम्बन्धः सङ्गस्तमभिजानन्त्यानिमुख्येन परिच्छिनत्ति यथा यं सङ्ग आवर्तश्रोतसोः कारणं जानानोऽप्यपरमार्थतः कोऽभिधीयतेयोऽनर्थं ज्ञात्वा परिहरति यश्चायमर्थः । संसारश्रोतः संगं रागद्वेषात्मकं ज्ञात्वा यः परिहरति स एव चावर्तःश्रोतसोः संगस्याभिज्ञाता ( आवट्टमेवमणुपरियट्टंति भावावर्तः संसारस्तमरहट्टघटीयंत्रन्यायेनानुपरिवर्तन्ते । तासुेव नरकादिगतिषु भूयो २ भवन्तीति आचा० अ. ५ उ. १ ॥

( विसये आवट्टमेयं तु पेहाए एत्थ विरमेज्जवेदवी ) आवट्टं तु इत्यादि रागद्वेषकषायविषयावर्तं कर्मबन्धावर्तं वा तु शब्दात् पुनः शब्दार्थे भावावर्तं पुनरुत्प्रेक्षाऽत्राऽस्मिन् भावावर्ते विषयरूपे । वेदविदागमविद्विरमेदाश्रवद्वारनिरोधं विदध्यात् । आचा० अ. ५ उ. ६ संसारकारणे, शब्दादिगुणे, च ( जेगुणे से आवट्टे जे आवट्टे से गुणे ) आचा० अ. १ उ. ४ आवर्तो नामादिभेदाच्चतुर्धा । नामस्थापने क्षुण्णे द्रव्यावर्तः स्वामित्वकरणाधिकरणेषु यथा संभवं योज्यः । स्वामित्वेनग्रादीनां कचित्प्रविभागे जलपरिभ्रमणं द्रव्यावर्तः द्रव्याणां वा हंसकारण्डवचक्रवाकादीनां व्योम्नि क्रीडता मावर्तो नादावर्तः । करणे तु तेनैव जलद्रव्येण भ्रमता यदन्यदावर्त्यते तृणकाष्ठादि स द्रव्यावर्तः । तथा त्रपुसीसकयोरहरजतसुवर्णेरावर्तमानैर्यदन्यत्तदन्तःपात्या वर्तते । स द्रव्यैरावर्तत इति । अधिकरणत्वविवक्षायामकस्मिन् जलद्रव्य आवर्तः ॥ तथा रजतसुवर्णादिकाश्रपुसीसकेष्वेकस्थालिष्वपु बहुषु द्रव्येष्वावर्तः । भावावर्तो नामान्यो भावसङ्क्रान्तिःऔदयिकभावोदयाद्वा नरकादिगतिचतुष्टयेषु भावावर्तः । आचा. १ अ. ५ उ. ॥

उत्कटमोहोदयापादितविषयाभिलाषसंपादकसंपत्प्रार्थनाविशेषे, सूत्र० श्रु० १ अ० ३ ॥

अह मे संति आवट्टा, कासवेणं पवेइया ।
बुद्धा जत्थ वकप्पंति, सीयंति अबुहा जहिं ॥१४॥

टीका । अथेत्यधिकारान्तरदर्शनार्थः । पाठान्तरं वा अहो इति । तच्च विस्मये इमे इति प्रत्यक्षासन्नाः सर्वजनविदितत्वात् सन्ति विद्यन्ते वक्ष्यमाणा आवर्तयन्ति प्राणिनं भ्रामयन्तीत्यावर्तास्तत्र द्रव्यावर्ता नद्यादेर्भावावर्तास्तूत्कटमोहोदयापादितविषयाभिलाषसंपादकसंपत्प्रार्थनाविशेषा एते चावर्ताः काश्यपेन श्रीमन्महावीरवर्द्धमानस्वामिनाऽनुत्पन्नदिव्यज्ञाने नावेदिताः कथिताः प्रतिपादिताः । यत्र येषु सत्सु बुद्धा अवगततत्त्वा आवर्तविपाकवेदिनस्तेभ्योऽवसर्पन्ते प्रमत्ततया तद्दूरगामिनो भवन्त्यबुद्धास्तु निर्विवेकतया ये ह्यासीदंत्यासक्तिं कुर्वन्तीति । आवर्तने, वाच. द्वादशावर्तादिवन्दनकगते सूत्राभिधानगर्भे कायव्यापारविशेषे । अव्यवहारसत्त्व आवर्तिनः पुन्यभवन ।

दुक्खाणमेव आवट्टं अणुपरियट्टइ आचा० अ. २ उ. ३

दुक्खाणमित्यादि । दुःखानां शारीरमानसानामावर्त्तः पौनः पुन्यभवनमनुपरिवर्तते दुःखावर्तोयमस्मिन् बम्भ्रम्यत इत्यर्थः ॥ णिच् नावे अत्र पुनः पुनश्चालने परिघट्टने । धातूनां द्रावणे । चिन्तायाञ्च । चिन्तयति चित्तं स्वविषयेषु पुनः पुनश्चाल्यते इति तस्यास्तथात्वम् । अश्वस्य घोटकचिह्ने रोमसंस्थानभेदे । आवर्तिनः दशावर्त्तयुक्ताः प्रशंसायाम् णिनिः ते च । चतुरस्योशिरस्यौ द्वौ द्वौ रन्ध्रोपरन्ध्रयोः । एको भाले हृदाने च, दशावर्ता ध्रुवाः स्मृताः ॥ १ ॥ पर्याधिपके जलभ्रमः मल्लि. वाच० ।

आवर्तो देवमणिनामहयानां महालक्षणतया प्रसिद्ध इति जं आवर्ताकारे, देहिनां रोमसंस्थानभेदे, च वाच० आदर्तौ दक्षि-

णे भागे, दक्षिणः शुभकर्तृणाम् । वामो वामेऽतिनिन्द्यः स्यात्, दिगन्यत्वे तु मध्यमः ॥ १ ॥ कल्प० । राजावर्तनामके मणौ पु. वाच० । मणिलक्षणभेदे आवर्तादीनि मणीनां लक्षणानीति ॥ आ. म. प्र. जी. प्र. ३ राज. । मेघाधिपभेदे, वाच० । स्तनितकुमारेन्द्रस्य घोषस्य स्वनामख्याते लोकपाले स्तनितकुमारेन्द्रस्य महाघोषस्य स्वनामख्याते लोकपाले, च स्था ठा. ४ ठ. श. ३ उ. ८ स्वनामख्याते जंबूद्वीपस्य दीर्घवैताढ्यपर्वते, स्था० ठा. ९ एकखुरे चतुष्पदस्थलचरपञ्चेन्द्रियतिर्यग्योनिकभेदे, प्रज्ञा. पद १ अहोरात्रभवे स्वनामख्याते पंचविंशतितमे मुहूर्ते, सम० स. ३४ । स्वनामख्याते ग्रामे ( आवत्ते, मुहत्तासे ) ततो भगवान् आवर्ते ग्रामे बलदेवगृहे प्रतिमां प्रतिपन्न इति आ. म. द्वि. । आ. चू. माक्षिकधातौ, न० वाच० स्वनामख्याते विमानभेदे, सम० स १७ । जंबूमंदरपौरस्त्ये सीताया महानद्या उत्तरस्थे स्वनामख्याते चक्रवर्तिविजयक्षेत्रे, स्था ठा. ८ । दो आवत्ता स्था० ठा. २ महाविदेहस्थे चक्रवर्तिविजयक्षेत्रे, च । जं ॥

कहिणं भंते महाविदेहे वासे आवत्तणामं विजए पण्णत्ते गोअमा ! णीलवंतस्स वासहरपव्वयस्स दाहिणेणं सीआए महाणईए उत्तरेणं णलिणे कूडस्स वक्खारपव्वयस्स पच्चिमेणं दहावतीए महाणइए पुरच्छिमेणं एत्थणं महाविदेहे वासे आवत्ते णामं विजए पणत्ते सेसं जहा कच्छस्स विजयस्स ॥ जं. ।

आव ( ट्ट ) पच्चावत्तसेढियतोत्थिय सोवत्थिय पूसमाणवद्धमाणगत्थंऽमकरंऽजारामाराफुल्लावलियपउमपत्त सागरतरंगवणलयपउमलयभत्तिचित्तं ॥

आवर्तप्रत्यावर्तश्रेणिप्रश्रेणिस्वस्तिकपुष्यमाणवर्द्धमानकमत्स्याण्डकमकराण्डकजारमारपुष्पावलिपद्मपत्रसागरतरंगवसन्तलतापद्मलताभक्तिचित्रनस्वनामख्याते नाट्यविधिभेदे, राज० ॥

आव ( ट्ट ) कूड-आवर्तकूट-न० महाविदेहस्थनलिनकूटवक्षस्कारपर्वतस्थे स्वनामख्याते कूटे, । जं. ॥

आव(ट्ट)त्तण-आवर्तन-आवृत आधारे ल्युट् सूर्यस्य पश्चिमादिगवस्थितच्छायायाः पूर्वदिग्गमनसमये मध्याह्नकाले "आवर्तना तु पूर्वाह्णोऽपराह्णस्तु ततः परम्" स्मृतिः वाच० विपर्यये, ( आवट्टती तस्य असाहुकम्मा ) आवर्तते विह्वीयते इति ॥ सूत्र० १ श्रु. ५ अ. ॥

पीडने, ( आवट्टतीकम्मसु पावएसु ) आवर्त्यते पीड्यते दुःखभाग् भवतीति सूत्र० १ श्रु. १ अ. ॥

आकंपने ( कहणाउट्टण आगमणपुच्छणा दीवणा य कज्जस्स ) आवर्तनमाकंपनं राज्ञो प्रत्तीभवनम् व्य० ९ उ. ।

आ. वृत भावे ल्युट् आलोडने, गुणने, च धातूनां द्रावणे आवर्तयति संसारचक्रम् आ. वृत णिच् कर्तरि ल्यु विष्णौ, ( आवर्तनो निवृत्तात्मा विष्णुसह० ) जम्बूद्वीपांपर्यायभेदे च । आवर्त्यतेऽनया ल्युट् ङीप् वर्त्याम् स्त्री आधारे ल्युट् ङीप् धातुद्रव्यद्रावणाधारमूषायाम्, करणे, ल्युट् वर्त्तने, प्राचीरादौ न० । वाच० ॥

आव(ट्ट)त्तणपेढिया-आवर्तनपीठिका-स्त्री० इंद्रकीलिकानिवेशस्थाने, आवर्तनपीठिका यत्रेन्द्रकीलके निवेश्यत इति जी. ३ प्र. ( यत्ररामयीतो आवत्तणपेढिआउ ) आवर्तनपीठिका नाम यत्रेन्द्रकीलका उक्तं च विजयद्वारवर्णनायाम् जीवाभि. ३ प्र. टीकाकारेण " आवर्तनपीठिका यत्रेन्द्रकीलको भवतीति " ॥ राज० । जी. ३० ॥

आव (ट्ट) त णिज्ज-आवर्तनीय-त्रि० आ. वृत-णिच्-अनीयर् द्रावणीये धात्वादौ, वाच० ॥

आव ( ट्ट ) तय-आवर्तक-पुं० आवर्त एव स्वार्थे कन् आवर्तशब्दार्थे प्रा. ॥

आव ( ट्ट ) त्तायंत-आवर्तायमान-त्रि० आवर्तं कुर्वाणे भ० श. ११ उ. ॥ प्रदक्षिणं भ्रमति, च कल्प० ॥

आवत्तायंतवट्टतडियविमलसरिसनयणं ।

( आवत्तायंति ) आवर्तं कुर्वाण तद्वय ये वृत्ते च तडिदिव विमले च सदृशे च परस्परेण ते लोचने यस्य स तथा तं । भ. ११ श. ११ उ. ॥

( आवत्तायति ) आवर्तायमानं प्रदक्षिणं भ्रमन्नुपदंविधं यत ( प्रवरकनगति ) प्रवरकनक तद्वत् वृत्ते ( तडियविमलत्ति ) विमला या तडित् विद्युत् तत्सदृशे नयने लोचने यस्य स तथा तम् । कल्प० ॥

आवडिय-आपतित-त्रि० समन्तात्पतिते, ॥

आवण आपण-पुं० हट्टे, कल्प० ॥

आवरग-आवरक-न०-आ वृ-करणे अप् संज्ञायां कन् अपवरके, आच्छादके वस्त्रादौ, ॥

आवरण-आवरण-न० आव्रियते देहोऽनेन आ वृ करणे ल्युट् वाच. । आ मर्यादया वृणोतीत्यावरणम् । स्था. ४ ठा. ।

अंगरक्षादिके, ज्ञा० ८ अ. ।

कवचादिके उत्त० ३ अ. ।

( आणावरणपहरणे ) आवरणं कवचादि आ. क०

आवरणं कवचादि । सूत्र० १ श्रु. ८ अ. ।

( जोहाणयं उप्पत्ती आवरणाणं पहरणाणं च ) आवरणानां सन्नाहानाम् स्था० ९ ठा. ॥

आवरणानां कंकटानाम् ज्ञा० १६ अ. ।

स्फरकादिक ( सन्नबद्धसरपहरणावरणभरियजुद्धसज्जाणं ) आवरणानि च स्फुरकादीनि । औप. । फलादिके, आचा १ अ. ५ उ. ।

आव्रियते आकाशमनेनेत्यावरणम् प्रसादनगरादिके, स्था० ९ ठा. ॥

आच्छादनसाधनमात्रे, वाच. स्थगने, वृ. १ उ. ।

ईयहरणे आयरिज्जइ वा णिवारइज्जइ वा आयरिज्जइत्ति इव. वृत्रियत । भ० ९ श. ३३ उ. ।

आव्रियते चैतन्यमनेन वेदान्तिमतसिद्धे चैतन्यावरणे ऽज्ञाने, धाच० ।

आव्रियते आच्छाद्यतेऽनेनेत्यावरणम् यद्वा आवृणोत्याच्छादयति जन्यादित्यः कर्तर्यनटप्रत्यये आवरणम् । मिथ्यात्वादिके कर्मभेदे, स च जीवव्यापाराहृतकर्मवर्गणान्तः पाती विशिष्टपुद्गलसमूहः । कर्म० । प्रव० २१५ द्वा. ।

तच्चाद्विविधम् ज्ञानावरणं दर्शनावरणं च (णाणस्स दंसणस्स आवरणं वयणीयं य ) पं. सं. ३ द्वा० ।

( पढमं णाणावरणं वीयं पुणदंसणस्स आवरणं ) ज्ञायते परिच्छिद्यते वस्तु अनेनेति ज्ञानं । सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोधः । आव्रियते आच्छाद्यतेऽनेनेत्या-

वरणं मिथ्यात्वादि,सचित्तजीवव्यापारगृहीतकर्मवर्गणापाती विशिष्टः पुद्गलसमूहज्ञानस्य मत्यादेरावरणं ज्ञानावरणं तथा दृश्यतेऽनेनेति दर्शनं सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोधस्तस्यावरणं दर्शनावरणं प्रव. ११५ द्वा. ॥ कर्म. । पंचप्रकारं ज्ञानावरणं चतुष्प्रकारं दर्शनावरणम् क. प्र. । आवरणानि मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमनः पर्यायज्ञानावरणकेवलज्ञानावरणचक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणावधिदर्शनावरणावधिदर्शनावरणा केवलदर्शनावरणलक्षणानि नव । पंचविधं ज्ञानावरणं नवविधं दर्शनावरणं आवरणानि ज्ञानावरणपञ्चकदर्शनावरणनवकस्वरूपाणि ॥ कर्म. ॥

पंचविहं नाणावरणं, नव नेया दंसणस्स ।

ते च भेदा ज्ञानावरणस्य ( णाणावरण ) शब्दे । दर्शनावरणस्य ( दंसणावरण ) शब्दे ।

आवरणस्य द्विविधानि स्पर्धकानि भवन्ति । सर्वोपघातीनि देशोपघातीनि च । सर्वं स्वावार्यं गुणमुपघ्नन्तीत्येवं शीलानि सर्वोपघातीनि । स्वावार्यस्य गुणस्य देशमुपघ्नन्तीत्येवं शीलानि देशोपघातीनि । आह च भाष्यकृत् ।

मइसुयनाणावरणं, दंसणमोहं च तदुवघातीणि ।
तप्फड्डगाई दुविहाई, सव्वदेसोवघाईणि ॥ आ. म. द्वि १ अ. ॥ पं. सं. ३ द्वा. ।

मिथ्यात्वादिकं च किंस्वरूपा ऽऽवारकमित्याह ।

अहुणो जस्सोदयओ, न लब्भइ दंसणाइमाइयं ॥
लद्धं पुणो व जस्सइ, तदिहावरणं कसायाई ॥

सुगमा । नवरं तदिह कषायादिकर्मावरणमुच्यते । तत्रा ऽनन्तानुबन्धिकषायचतुष्टयं मिथ्यात्वञ्च सम्यक्त्वस्यावरणं । श्रुतस्य श्रुतज्ञानावरणं । चारित्रस्य चारित्रमोहनीयमिति ॥

तदेवाह ॥ पढमिल्लुयाण उदए इत्यादि ॥

अथवा पातनान्तरमाह ।

अहवा खवाइओ, केवलाई जं जेसि ते कई कसाया
को वा कस्सावरणं, को वक्खयाई कमो कस्स ॥ ११६ ॥

अथवा यत्केवलादिक्षमादिशब्दाद्दर्शनचारित्रपरिग्रहः एषां कषायाणां क्षयादितो भवत्यादिशब्दात्क्षयोपशमादि परिग्रहः। कति कषायाः को वा कस्य सादायिकस्यावरणं को वा क्षयादिक्रमः । कस्येति गाथार्थः ॥

अत्रोत्तरमाह ॥

मिल्लुयाण उदए, नियमा संजोयणा कसायाणं ।
सम्मदंसणलंभं, भवसिद्धी या वि न लहंति ॥ ११७ ॥

प्रथमिल्लुकानां संयोजनाकषायाणामुदये नियमात्सम्यग्दर्शनलाभं भवसिद्धिका अपि न लभन्ते । किमुताऽभव्याः । इत्यक्षरयोजना । भावार्थस्त्वयं । प्रथमा एव देशीवचनतः प्रथमिल्लुकास्तेषां प्रथमिल्लुकानामनन्तानुबन्धिक्रोधमानमायालोभानामित्यर्थः । प्राथम्यञ्चैषां सम्यक्त्वाख्यप्रथमगुणविघातित्वात् क्षपणक्रमाङ्गीति । उदये विपाकानुभवे सति नियमान्नियमेन अस्य व्यवहितसम्बन्धस्य च दर्शित एव । किं विशिष्टानां प्रथमिल्लुकानामित्याह । कर्मणा तत्फलभूतसंसारेण संयोजनाहेतवः कषायाः संयोजनाकषायास्तेषामुदये नियमात्सम्यगविपरीतं दर्शनं सम्यग्दर्शनं । सम्यक्त्वं तस्य लाभः तं भव सिद्धिर्येषामस्ते भवसिद्धिकाः ॥ ननु सर्वेषामपि सिद्धिर्भव एव कस्मिन्नकिंचन्नवाति । इत्यनेन व्यवच्छिद्यते । सत्यम् । किन्त्विह व्याख्यानाद्भव एव भवा गृह्यन्ते । तद्भवसिद्धिका इत्यर्थः । तेऽपि न लभन्ते किमुताऽभव्याः । इति निर्युक्तिगाथार्थः ॥

भाष्यम् ॥

खवणं पडुच्च पढमा, पढमगुणविघाइणो त्ति वा जम्हा ।
संजोयणा कसाया, भवादिसंजोयणा लुत्ति ॥

गतार्थैव ॥ विशे० ॥

आओ वउवादाणं, तेण कसाया जओ कमस्साया ।
चत्तारि बहुव्वयणओ, एवं वीआदओ वी मया ॥

ते च बहुवचननिर्देशाच्चत्वारः क्रोधादयो गम्यन्ते । एवं देशविरत्याद्युत्तरोत्तरगुणघातित्वाद्वितीयतृतीयचतुर्थत्वेन कषायशब्दाद्दिचत्वारोऽपि क्रमेण च द्वितीयादयोऽपि मताः सम्मता इति ॥

भवसिद्धियावीत्येतद् व्याख्यानयति ॥

भवसिद्धियावि जणिए, नियमा न लहंति तहमभव्वावि ।
अविसद्दणवगहिया, परित्तसंसारिया इया ॥

भवसिद्धिका अपीत्युक्तेऽपि शब्दादभव्यास्तं नैव लभन्त इत्ययमर्थ गम्यत एव । अथवाऽपि शब्दात्परीत्तसंसारादयोऽपि न लभन्त इति गम्यत इति गाथार्थः ॥ २३१ ॥

उक्ताः सम्यक्त्वस्याऽऽवरणभूताः कषायाः अथ देशविरत्यावरणभूतांस्तानाह ॥

बिइअ कसायाणुदये, अप्पच्चक्खाणणामधेज्जाणं ।
सम्मद्दंसणलंभं, विरया विरइं न उ लहंति ॥

सर्वप्रत्याख्यानं देशप्रत्याख्यानञ्च न येषामुदये लभ्यतेऽप्रत्याख्यानाः । अकारस्य सर्वप्रतिषेधवचनत्वादप्रत्याख्यानइति नामधेयं येषामप्रत्याख्याननामधेयानां द्वितीयस्य देशविरतिगुणस्याऽऽवारकत्वात् । द्वितीयास्ते च ते कषायास्तेषां द्वितीयकषायाणामुदये भव्याः सम्यग्दर्शनलाभं लभन्त इति वाक्यशेषः ॥ अत्र च वाक्यशेषः ( विरयाविरइं न उ लहंति ) इत्यत्र तु शब्दोपादानात् लभ्यते । एषामुदये भव्याः सम्यग्दर्शनलाभं लभन्ते ते विरताविरतिं देशविरतिमपुनर्लभन्ते इति वाक्यसङ्गतिरिति विरति वा । विरतिश्च यस्यां निवृत्तौ सा विरताविरतिस्तामिति निर्युक्तिगाथार्थः ॥

भाष्यम् ॥

सव्वं देसो वजओ, पच्चक्खाणं न जेसिमुदएणं ।
ते अपच्चक्खाणा, सव्वनिसेहे मओऽकारो ॥१॥
सम्मदंसणलंभं, लभंति भवियत्ति वक्कसेसोयं ।
विरयाविरइविसेसणं तुमदंसलसिओयंच ॥२३४॥

गतार्थैव ।

अथ तृतीयस्य सर्वविरतिगुणस्याऽऽवारकांस्तृतीयकषायानाह ॥

तइयकसायाणुदए, पच्चक्खाणावरणनामधेज्जाणं ।
देसिक्कदेसविरइं, चरित्तलंभं न उ लहंति ॥

सर्वविरतिलक्षणतृतीयगुणघातित्वात्क्षपणक्रमाद्वा तृतीयास्ते च ते कषायाश्च तृतीयकषायाः क्रोधादयः चत्वारः तेषामुदये कथंभूतानामाह प्रत्याख्यानावरणाः प्रत्याख्यानं सर्वविरतिलक्षणं तस्यावरणाः एतदेव नामधेयं येषां ते प्रत्याख्यानावरण

नामधेयास्तेषां । आह न त्वनन्यत्वख्यानमध्येयानामुदय सर्वथा प्रत्याख्यानं नास्तीत्युक्तं । तत्राऽप्रतिविरुद्धत्वादिह्यपि आवरणशब्दः प्रत्याख्यानस्य सर्वस्यापि निषेधो गम्यत इति । क एषां प्रतिविशेष इत्यत्रोच्यते । तत्र नञ्सर्वनिषेध उक्तः । इह त्वाङ्मर्यादेपदर्थत्वात्सर्वविरतिप्रत्याख्यानमर्यादया अथवा ईषत्सावद्ययोगानुमतिमात्रविरतिरूपं प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणा इति व्युत्पत्तेस्सर्वविरतिरूपप्रत्याख्याननिषेधार्थ एवायं वर्तते न देशविरतिप्रत्याख्याननिषेधे । आवरणशब्देस्तथाचाह देशाश्च देशैकदेशौ तत्र देशः स्थूलप्राणातिपातादि, एकदेशस्तु तस्यैव वृक्षसमस्तपतकायातिपातस्तयोर्विरतिः निवृत्तिस्तां लभते इति वाक्यशेषः (चरित्तलंभं न लभंति) इत्यत्र तुशब्दोपादानादत्र लभ्यते । चरत्यनिंदितमनेनेति चारित्रं । अष्टविधकर्मचयरिक्तीकरणाद्वा चारित्रं । सर्वविरतिक्रियेत्यर्थः । तस्य लाभस्तेषामुदये न लभते देशैकदेशविरतिं पुनर्लभत इति निर्युक्तिगाथार्थः । विशे. ॥

प्रत्याख्यानावरणवक्तव्यता (पच्चक्खाणावरण) शब्दे ॥

अथाकर्मवार्थं संगृह्य विभणिषुस्तथा चतुर्थकषायाणां यथाख्यातचरित्रविघातित्वं च दिदर्शयिषुराह ॥

मूलगुणाणं लंभं, न लहइ मूलगुणघाइणो उदय ।
संजलणाणं उदए, न लहइ चरणं अहक्खायं ॥

इह सम्यक्त्वमहाव्रतानि च मूलत्वात् गुणा मूलगुणाः उत्तरगुणानामाधारत्वात्तेषां मूलगुणानां लाभं न लभते । कदेत्याह । यथोक्तान् मूलगुणान् हंतुं शीलं येषां ते मूलगुणघातिनस्तेषां मूलगुणघातिनामनंतानुबंधि अप्रत्याख्यानप्रत्याख्यानावरणानां द्वादशानां कषायाणामुदये एतच्च (पढमिल्लुयाण उदए) इत्यादिना सर्वं भावितमेव तथा ईषज्ज्वलनात्सज्ज्वलनाः संपदि ज्वलनात् संज्वलनाः परीषहादिसंपाते चारित्रिणमपि ज्वलयन्तीति वा सज्ज्वलनाः क्रोधादय एव चत्वारः कषायास्तेषामुदये न लभते लब्धं वा त्यजति चरणं चारित्रं किंसर्वमपि नेत्याह । यथैव तीर्थंकरगणधरैराख्यातं । अकषायमित्यर्थः । सकषायं तु लभते । ननु यथाख्यातचारित्रमात्रमेवोपघ्नंति सज्वलनाः किं तु विशेषचारित्राणामपि देशोपघातिनो भवंति । तदुदये शेषचारित्रदेशाभिचारसिद्धेरितिनिर्युक्तिगाथार्थः । विशे० आव. म. ।

आवरणसत्थ—आवरणशास्त्र—न० आव्रियते आकाशमनेनेत्यावरणम् । जवनप्रासादनगरादि तल्लक्षणं शास्त्रमपि तथा वास्तुविद्यात्मके पापश्रुतभेदे, स्था० ९ ठा. ।

आवरणावरणपविभत्ति—आवरणावरणप्रविभक्ति—न० नाट्यविधिभेदे. ॥

चंदावरणपविभत्तिं च सूरावरणपविभत्तिं च आवरणावरणपविभत्तिं णामं दिव्वं णट्टविहं उवदंसेइ ॥

चन्द्रावरणप्रविभक्तिसूर्यावरणप्रविभक्तियुक्तमावरणावरणप्रविभक्तिमित्येवं वरणप्रविभक्तिनामकमष्टमं नाट्यविधिमुपदर्शयन्ति । राज० ॥

आवरणी—आवरणी— स्त्री० आवरणकारण्याम् विद्यायाम्. कल्प० १६ अ० ॥

आवरिज्जमाण—आव्रियमाण— त्रि० स्वल्पमाने, (आवरिज्जमाणाप) । आवरिज्जमाणत्ति स्वल्पमानानि उ० १॥ ना० १ अ० ।

आवरित्ता—आवृत्य— अव्य० आवरणं कृत्वेत्यर्थे (आवरित्ता चिह्रइ) स्था० ॥

आवरिय—आवृत्त— त्रि० आ० वृ क्त कृतावरणे, अप्रकाशीकृते, आच्छादिते, वाच० ( आवरिओ कम्मेहिं ) आवृतःप्रच्छादितः नि० चू० १ उ० । आवरिया विरणमुहे ) आवृता अपि सन्तः कलबाहा । आ० प्र० १ अ० ॥

आवरिसण—आवर्षण— न० उदकादिना उदकप्रदाने, ॥

समज्जणआवरिसणउवलेवणसुहुमदीवए चेव ।

आवर्षणमुदकेन उदकप्रदानमिति बृ० उ० १ ॥ आवरिसणं पाणिएण छडकरणं नि० चू० २ उ० । ( उवलेवणसम्मज्जणावरिसण ) आवर्षणं गन्धोदकादिनेति ग० २ अधि० अनु. । उदगादि आवरिसणं उदकेनादिशब्दात् घृतेन तैलेन वाऽऽवर्षणं करोति बृ० ४ उ. ॥

समन्तावर्षण ( आवरिसज्ज ) आसमन्ताद्वर्षेत् राज० ॥

आवरिहिय—आवर्हित— त्रि० आ० वृह उद्यमन णिच् क्त आ बर्हाहंसायाम् क्तः । उत्पाटित, उन्मूलिते. वाच० ॥

आवलण—आवलन—न० मोटने (गलगवलावलणमारणाणि) गलस्य कण्ठस्य गवलस्य शृंगस्याऽऽवलनं च मोटनम् प्रश्न० १ द्वा० ॥

आव ( लि ) ली—आव ( लि ) ली स्त्री० आ वल वा ङीप् पङ्क्तौ विशे० अनु० १ अ० ( कांचावलीइ वा हारावलीइ वा वययावलीइ वा )आवलिपदोपादानं वर्णोत्कर्षप्रतिपादनार्थम् । जं० । अहयायोजीवाजीवशब्द द्रष्टव्यः ॥

आवालिय—आवलित— त्रि० आ वल वलने क्त ईषद्वलिते , सम्यक्चलिते, च । वाच० । आमोटिते. ॥

(अणवालियंओवालियं) अवलितं यथात्मना वस्त्रस्य च घलितमिति मोटन न भवतीति । उत्त० २६ अ० ॥

आवलिय ( या ) णिवाय—आवलिकानिपात—पुं० आवलिकया क्रमेण निपातः संपात आवलिकानिपातः क्रमेण संपाते.॥

ताजोगेति वा पुरस आवलि ( त ) याणिवाते आहितेति वदेज्जा ताइति ॥

आस्तां तावदन्यकथनीय सम्प्रत्येतावत्कथ्यते । योग इति । वस्तनो न हवऋतस्य आवलिकानिवायेति) आवलिकया क्रमेण निपातश्चन्द्रसूर्ययोः सह संपात आख्यातो मयेति वदेत सू० प्र. प्रा. १० । चं. प्र. प्रा. १० ।

आवलिय ( या ) पविट्ठ—आवलिकाप्रविष्ट—त्रि० आवलिकासु श्रेणिषु प्रविष्टा व्यवस्थिता आवलिकाप्रविष्टाः आगया व्यवस्थिते, जी. ३ प्र. ॥

इमे णं भंते ! रयणप्पभाए पुढवीए णरगा किं संठिता प० गो० दुविहा पं० तं आवलियपविट्ठा य आवलीयबाहिराय तत्थणं जे ते आवलियपविट्ठा ते तिविहा पं. तं. वट्टा १ तंसा २ चउरंसा ३ जी. प्र. ३ ।

आवलिकासु संस्थानमधिकृत्य त्रिविधाः प्रज्ञप्तास्तद्यथा । वृत्तास्त्र्यस्राश्चतुरस्राः । जी. टी. ।

सोहम्मीसाणेसु णं भंते ! कप्पेसु विमाणे किं संठिता प० गो० दुविहा० पं० तं० आवलियाए बाहिराय ॥

तत्रावलिकाप्रविष्टानि नाम यानि पूर्वादिषु चतसृषु दिक्ष्वण्योन्यस्थितानि यानि पुनरावलिकाप्रविष्टानां प्रांगणप्रदेशे

कुसुमप्रकर इव यतस्ततो विप्रकीर्णानि तान्यावलिकाबाह्यानि। तानि च पुष्पावकीर्णानीत्युच्यन्ते । पुष्पावकीर्णा इव इतस्ततो-ऽवकीर्णानि विप्रकीर्णानि पुष्पावकीर्णानि इति व्युत्पत्तेः जी० ३ प्रति० ४ उ० ॥

आवलिय (या) पविभत्ति-आवलिकाप्रविभक्ति-न० दिव्य नाट्यविधिभेदे, ॥

चंदावलिपविभत्तिं च सूरावलिपविभत्तिं च हंसावलिपविभत्तिं च एगावलिपविभत्तिं च तारावलिपविभत्तिं च मुत्तावलिपविभत्तिं च आवलियपविभत्तिं णामं दिव्वं णट्टविहिं उवदंसेइ ॥

चन्द्रावलिप्रविभक्तिः सूर्यावलिप्रविभक्तिः, वलयावलिप्रविभक्तिः हंसावलिप्रविभक्तिः एकावलिप्रविभक्तिः, तारावलिप्रविभक्तिः, मुक्तावलिप्रविभक्तिः, कनकावलिप्रविभक्तिः, रत्नावलिप्रविभक्तिस्तथा नितथात्मकमावलिप्रविभक्ति नाम पञ्चमं नाट्यविधिमुपदर्शयन्ति राज० टी० ॥

आवलिय (या) बाहिर-आवलिकाबाह्य-त्रि० इतस्ततो विप्रकीर्णे, कल्पवृक्षलतादू (आवलियापविट्ठ) शब्दे उक्तम् जी० ४ प्र० ॥

आवलिया-आवलिका-स्त्री० पङ्क्तौ वृ० ३ उ० । आवलिका पङ्क्तिरभिधीयते । इत्थं आवलियत्ति पङ्क्तिरिति वचनात् प० म० (भमरावलि यत्ति वा) भ्रमरावली भ्रमरपङ्क्तिः । राज० एकान्ते स्थितायां विच्छिन्नायामनन्तर्यां च । या विच्छिन्ना एकान्ते भवति मण्डली सा आवलिका या पुनः स्वस्थान एव सा मण्डली । व्य० ४ उ० ।

अथावलिकाया मण्डल्याश्च कः प्रतिविशेष इत्यत आह ॥

छिण्णाछिण्णविसेसो, आवलियाए य मंडलीए य ।
मंडलीए महाणं, सच्चित्ताएसु संकमति ॥

आवलिकामण्डल्योः परस्परं छिन्नाछिन्नरूपो विशेषः आवलिका छिन्ना विविक्त एकान्ते भवति । मण्डलिका त्वच्छिन्ना (आवलियत्थ छिन्ना मंडलिया होइ अच्छिन्ना उ) इति वचनात् । एतदेव सुव्यक्तमाह । आवलिकायामुपाध्यायको अन्तर्मध्ये विविक्ते प्रदेशे तिष्ठति । मण्डल्यां पुनः स्वस्थानमाभवनं स पाठयितरिस्सकामानस्यानि सूत्राणि तेषु च अनन्तरसचित्तादिविषय (आवलियमण्डलिकमा पुच्छो छिण्णाछिण्णभेदेण) व्य० १० उ० । क्रमे, सूर० प्र० १० प्रा० चं० प्र० १० प्रा० । कालविशेषे, असंख्येयसमयसंघातात्मकः कालविशेष आवलिका । विशे० । असंख्याताः समया आवलिका जघन्ययुक्ता सङ्ख्येयसमयराशिमानेति । तं० । अनु० । असंख्यातसमयसमुदायात्मिका आवलिका: क्षुल्लकभवग्रहणकालस्य षट्पञ्चाशदुत्तरद्विशततमभागवर्त्तिता इति । ज्यो० ग० २ च० प्र० प्रा० २० आ० म० ।

असंखिज्जाणं समयाणं समुदयं समिइ समागमेणं सा एगा आवलियत्ति पवुच्चइ । जं० ।

टी० असङ्ख्यातानां सम्बन्धिनो ये समुदया वृन्दानि तेषां याः समितयो मीलनानि तासां यः समागमः संयोगः समसमुदयसमितिसमागमस्तेन यत्कालमानं भवतीति गम्यते स कालविशेष इति प्राच्यते (संखिज्जा आवलियत्ति) किल षट्पञ्चाशदधिकशतद्वयमावलिकानां क्षुल्लकभवग्रहणं भवति भ० ६ श० ७ उ० ॥ अनु० विशे० नं० पं० स० दर्श० कर्म्म० ज्यो० त० ॥

आवसंत-आवसत्-त्रि० आवासं कुर्वति ॥

(सुयमे आउसंतेणं भगवया एवमक्खायं) सुयमे आवसंतेणंति भगवत्यस्य विशेषणमेतत् आङिति गुरुमर्यादया वसता अनेन तत्वतो गुरुमर्यादावर्तित्वरूपत्वात् गुरुकुलवासस्य तद्विधा नमयत उक्त ज्ञानादिहेतुत्वात् स्था० १ ठा० (गारमावसंतेहि) आगारमावसद्भिः सेवमानैः आचा० ५ अ० ३ उ० ॥

आवसह-आवसथ-पुं० आवसत्यत्र आ वस अथच्. गृहे, सूत्र० २ श्रु० २ अ० ॥

प्रति० (आवसहं च जाणमतं च) आवसथं गृहमिति सूत्र० १ श्रु० ४ अ० । आश्रये, (आवसहं वासमुस्सिणामि) आवसथं वा युष्मदाश्रयं समुत्कृणोमि इत्यादि० ७ अ० २ उ० । परिव्राजकाश्रये उटजाकारे गृहे, आवसथः परिव्राजकाश्रय इति प्रश्न० १द्वा० । आवसथास्तापसाश्रया उटजादयः । दशा० (जेणेव परिव्वायगावसहे तेणेव उवागच्छइ परिव्वायावसहेत्ति) परिव्राजकमठः भ० २ श० १ उ० । केचनावसंथपूटजाकारेषु गृहेषु वसतीति सूत्र० २ श्रु० २ अ० आर्याच्छन्दोरचिते कापनंदे, वाच० ॥

आवसहिय-आवसथिक-पुं० आवसथो गृहं तेन च रंतीत्यावसथिकः । प्रति० सूत्र० १ श्रु० १ अ० आवसथे गृहे वसति ठञ् स्त्रियां ङीप् गृहस्थे, वाच० आवसथास्तापसाश्रया उटजादयस्तत्र वसन्तीत्यावसथिकाः ॥ दशा० तीर्थिकविशेषे सूत्र० २ श्रु० ७ अ० आवसथिकाः केचनावसथपूटजाकारेषु गृहेषु वसतीति सूत्र० २ श्रु० २ अ० ॥

आवसहि-आवसति-स्त्री० वसत्यत्र गृहे वसतिः रात्रिः सम्यक् वसतिः प्रा० स० निशीथे, वसतेः सम्यक्त्वस्थावश्यं गृहवासयाग्यत्वं तर्ह्यारात्रेरवश्यं भवतीति तस्य तथात्वम् वाच० ॥

आवस्सय-आपाश्रय-पुं० आङ्मर्यादाभिविधिवाची । आमर्यादयाऽभिविधिना वा गुणानामापाश्रय आधार इदमित्यापाश्रयः । सामायिकादिके आवश्यके, ॥

विशेषावश्यके आवश्यकपर्यायनामान्यधिकृत्य ।

आवस्सयं अवस्सकरणिज्जं धुवनिग्गहो विसोहीय ।

आमर्यादयाऽभिविधिना वा गुणानामापाश्रय आधार इदमित्यापाश्रयं गुणाधार इत्यर्थः । नन्वाधारवाचक आपाश्रय शब्दः पुंल्लिङ्गे वर्तते । तत्कथमापाश्रयमिति नपुंसकत्वमिति चेत् । प्राकृतशैलीवशतोऽदोषादिति । विशे० ।

आवश्यक-न० अवश्य भाव आवश्यकं इञ्मनोज्ञादि त्वाच्छेति मनोज्ञादेरधिकृतत्वाद्वुञ् । आ० चू० २ अ० ।

अवश्यंभावे नैयत्ये,वाच० अवश्यं कर्म्म आवश्यकं अवश्यकर्तव्यक्रियानुष्ठाने, । नं० ।

आवस्समपरिसुद्धीय, होंति जिनकप्पस्स लिङ्गाइं ।

आवश्यकपरिशुद्धिश्चावश्यं करणीययोगानिरतिचारतेति । दशा० अ० १० । द्वा० । आव० । धर्म० । अनु० । पञ्चा० । स्था० १० ठा० । नियमात्कर्तव्ये, आवश्यकानि नियमत एव करणीयानीति आव० ४ अ० । अवश्यं नावित्वाद्यच्यन्याद्यावश्यकं स्था०४ठा०अनु० ।अवश्यकर्तव्यमावश्यकम् श्रमणादिभिरवश्यमुभयकालं क्रियते इति भावः । कश्चिद्दितिकर्मणि बाहुलकाद्वुञ् प्रत्ययः । पृषोदरादय इति निपातनात् शेषरूपसिद्धिः । अथवा ज्ञानादिगुणानामासमन्ताद्वश्यमात्मानं करोति । यदि वा आसमन्ताद्वश्या इन्द्रियकषायादिभावशत्रवो यस्मात्तदाव-

यद्वार्थमेतद्व्याख्या यद्वस्तुन इन्द्रादिरभिधानमिन्द्र इत्यादि वर्णावलिमात्रमिदमेव आवश्यकलक्षणवर्णचतुष्टयावलीमात्रमिदमेव ।

आवश्यकलक्षणवर्णचतुष्टयावलिमात्रं । यच्चतुर्भिर्वर्णैरभिसंबन्धात्तन्नामेति संटङ्कः ॥

अथ प्रकारान्तरेण नाम्नो लक्षणमाह । स्थितमन्यार्थे तदर्थनिरपेक्षं पर्य्यायानभिधेयञ्चेति तदपि नाम यत्कथंभूतमित्याह । अन्यश्चासावर्थश्च अन्यार्थो गोपालदारकादिलक्षणस्तत्र स्थितमन्यत्रेन्द्रादावर्थे यथार्थत्वेन प्रसिद्धं तदन्यत्र गोपालदारकादौ यदारोपितमित्यर्थः । अतएवाह । तदर्थनिरपेक्षमिति । तस्येन्द्रादिनाम्नोऽर्थः परमैश्वर्य्यादिरूपस्तदर्थः । स चासावर्थश्चेति वा तदर्थस्तस्य निरपेक्षं गोपालदारकादौ तथा तदर्थस्याऽभावात्पुनः किमन्यत्तदित्याह । पर्य्यायानभिधेयमिति । पर्य्यायाणां शक्रपुरन्दरादिनामनभिधेयमवाच्यं गोपालदारकादयो हीन्द्रादिशब्दैरुच्यमाना अपि शचीपत्यादिरिव शक्रपुरन्दरादिशब्दैर्नाभिधीयन्ते । अतस्तन्नामाऽपि नाम तद्धर्तारं नेदोपचारात्पर्य्यायानभिधेयमित्युच्यते च । शब्दाश्चान्त एव लक्षणान्तरसूचकं शचीपत्यादौ प्रसिद्ध । तन्नाम वाच्यार्थशून्ये अन्यत्र गोपालदारकादौ यदारोपितं तदपि नामेति तात्पर्य्यम् । तृतीयप्रकारेणाऽपि लक्षणमाह । यादृच्छिकं च तथेति । तथाविधव्युत्पत्तिशून्यं डित्थकापित्थादिरूपं यादृच्छिकं स्वेच्छया नाम क्रियते तदपि नामेत्यार्थार्थः ॥ अनु० ॥

अत्र नामावश्यकस्वरूपनिरूपणार्थं सूत्रकार एवाह ॥

**सेकिंतं नामावस्सयं २ जस्स णं जीवस्स वा अजीवस्स वा जीवाण वा अजीवाण वा तदुभयस्स वा तदुभयाण वा आवस्सएत्ति नामं कज्जइ सेत्तं नामावस्सयं ॥**

अथ किं तन्नामावश्यकमिति प्रश्ने सत्याह । ( नामावस्सय जस्स ) मित्यादि । अत्र द्विकलक्षणनाऽङ्केन सूचितं द्वितीयमपि ( नामावस्सय ) ति पदं द्रष्टव्यं । एवमन्यत्राऽपि यथासम्भवमभ्यूह्यम् । णमिति वाक्यालङ्कारे । यस्य वस्तुनो जीवस्य वा अजीवस्य वा जीवानामजीवानां वा ( तदुभयस्स वा ) तदुभयानां वा आवश्यकमिति यन्नाम क्रियते तन्नामावश्यकमित्यादिपदेन संबन्धः ॥ नाम च तदावश्यकं चेति व्युत्पत्तिरथवा यस्य जीवादिवस्तुनः आवश्यकमिति नाम क्रियते । तदेव जीवादिवस्तु नामावश्यकं । नाम्ना नाममात्रेणाऽवश्यकं नामावश्यकमिति व्युत्पत्तिर्वाशब्दः पक्षान्तरसूचका इति समुदायार्थस्तत्र जीवस्य कथमावश्यकमिति नाम संभवतीत्युच्यते । यथा लोके जीवस्य स्वपुत्रादेः कश्चित्सोऽहको देवदत्त इत्यादि नाम करोति । तथा कश्चित्स्वाभिप्रायवशादावश्यकमित्यपि नाम करोति । अजीवस्य कथमिति चेदुच्यते । इहावश्यकावासकशब्दयोरेकार्थता प्रागुक्ता । ततश्च रुक्षशुष्कोऽचित्तो बहुकोटराकीर्णो वृक्षोऽन्यो वा तथाविधः कश्चित्पदार्थविशेषः सर्पादरावासोऽयमिति लौकिकैर्व्यपदिश्यत एव । स च वृक्षादिर्यद्यप्यनन्तैः परमाणुलक्षणैरजीवद्रव्यैर्निष्पन्नस्तथाप्येकस्कन्धपरिणतिमाश्रित्यकाजीवत्वेन विवक्षित इति स्वार्थिककप्रत्ययोपादानादेकाजीवस्यावासकनाम सिद्धम् । जीवानामपि बहूनामावासकनाम सन्दृश्यते । यथा इष्टकापाकाद्यग्निर्मूषिकावास इत्युच्यते । तत्र ह्यग्नौ किल मूषिकाः संमूर्च्छन्त्यतस्तेषामसङ्ख्येयानामग्निजीवानां पचनादावासकनाम सिद्धम् । अजीवानान्तु यथा नीडं पक्षिणामावास इत्युच्यते । तन्नीडं बहुभिस्तृणाद्यजीवैर्निष्पद्यते । इति बहूनां जीवानामावासकनाम भवति । इदानीमुभयस्यावासकसंज्ञा भाव्यते । तत्र गृहदीर्घिका अशोकवनिकाद्युपशोभितः प्रासादादिप्रदेशो राजादेरावास उच्यते । सौधर्म्मादिविमानं वा देवानामावासोऽभिधीयते । अत्र च जलवृक्षादयस्सचेतनरत्नादयश्च जीवा इष्टकाः काष्ठादयो चेतनरत्नादयश्चाजीवास्तन्निष्पन्नमुभयं तस्य कप्रत्ययोपादाने आवासक संज्ञा सिद्धा । उभयानां त्वावासकसंज्ञा यथा सम्पूर्णनगरादिकं राजादीनामावास उच्यते । समस्तः सौधर्म्मादिकल्पो वा इन्द्रादीनामावासोऽभिधीयते । अत्र च पूर्वोक्तप्रासादविमानयोरेकत्वादेकमेव जीवाजीवोभयं विवक्षितमत्र तु नगरादीनां सौधर्म्मादिकल्पानां च महत्वाद्बहूनि जीवाजीवोभयानि विवक्षितानीति विवक्षयाभेदो द्रष्टव्यः एवमन्यत्राऽपि जीवादीनामावासकसंज्ञा यथा सम्भवं भावनीया ॥

दिङ्मात्रप्रदर्शनार्थत्वादस्य निगमयन्नाह । (सेतमित्यादि) (सेत्त)मित्यादि वा क्वचित्पाठः तदेतन्नामावश्यकमित्यर्थः ॥

इदानीं स्थापनाऽवश्यकनिरूपणार्थमाह ।

**सेकिंतं ठवणावस्सयं २ जणं कट्ठकम्मे वा पोत्थकम्मे वा चित्तकम्मे वा लिप्पकम्मे वा गंथिमे वा वेढिमे वा पूरिमे वा संघाइमे वा अक्खे वा वराडए वा एगो वा अणेगा वा सब्भावठवणा वा असब्भावठवणा वा आवस्सएत्ति ठवणा ठविज्जइ सेत्तं ठवणावस्सयं । नाम ठवणाणं को पइविसेसो णामं आवस्सकहिअं ठवणा इत्तरिआ वा होज्जा आवकहिआ वा ॥**

टीका । सेकिंतमित्यादि अथ किंतत् स्थापनावश्यकमिति प्रश्ने सत्याह । ( ठवणा आवस्सय जण्णं ) मित्यादि । तत्र स्थाप्यते सुष्कोऽयमित्यभिप्रायेण क्रियते निर्वर्त्यते इति स्थापना । काष्ठकर्म्मादिगतावश्यकवत् साध्वादिरूपा । सा चासौ आवश्यकतद्वतोरभेदोपचारादावश्यकं च स्थापनावश्यकं स्थापनालक्षणं च सामान्यत इदमुक्तं । यत्तु तदर्थवियुक्तं तदभिप्रायेण यच्च तत्करणि लेप्यादिकर्म्म तत्स्थापनेति क्रियते अल्पकालं च ॥ १ ॥ इति विनेयानुग्रहार्थमत्रापि व्याख्यातुशब्दो नामलक्षणस्य स्थापनालक्षणस्य भेदसूचकः । स चासावर्थश्च तदर्थो भावेन्द्रभावावश्यकादिलक्षणस्तेन वियुक्तं रहितं यद्वस्तु तदभिप्रायेण भावेन्द्राद्यभिप्रायेण क्रियते स्थाप्यते तत् स्थापनेति संबन्धः किंविशिष्टं यदित्याह । यच्च तत्करणि तेन भावेन्द्रादिना सहकारणि सादृश्यं तस्य तत्करणि तत्सदृशमित्यर्थः । चशब्दात्तदकरणि चाक्षादिवस्तु गृह्यते । असदृशमित्यर्थः । किंपुनस्तदेव भूतं वस्त्वित्याह । लेप्यादिकर्म्मेति लेप्यपुत्तलिकादीत्यर्थः । आदिशब्दात् काष्ठपुत्तलिकादि गृह्यते अक्षादि अनाकारं क्रियते कालं तत् क्रियते इत्याह । अल्पः कालो यस्य तदल्पकालमित्वरकालमित्यर्थः । च शब्दाद्यावत्कथिकं शाश्वतप्रतिमादि यत्पुनर्भावेन्द्रार्थरहितं साकारमनाकारं वा तदभिप्रायेण क्रियते तत् स्थापनेति तात्पर्यमित्यार्थार्थः ॥

इदानीं प्रकृतमुच्यते (जण्णंति) णमिति वाक्यालंकारे यत्काष्ठकर्म्मणि वा चित्रकर्म्मणि वा वराटके वा एको वा अनेको वा सद्भावस्थापनायां वा असद्भावस्थापनायां वा । आवस्सएत्ति । आवश्यकतद्वतोरभेदोपचारात्तद्वानिह गृह्यतेऽतश्चैको वा अनेको वा कथं भूतो अत उच्यते । आवश्यकक्रिया वानावश्यक

